GAEKWAD'S ORIENTAL SERIES

Published under the authority of
the Government of His Highness
the Maharaja Gaekwad of Baroda

*General Editor*:

B. BHATTACHARYYA, M.A., Ph.D.

---

No. XXIX (Golden Jubilee Number)

# NALAVILÂSA

श्रीरामचन्द्रसूरिविरचितम्

# नलविलासनाटकम् ।

# NALAVILÂSA

OF

# RÂMACHANDRA SÛRI

EDITED BY

G. K. SHRIGONDEKAR, M.A.,

*Sanskrit Librarian, Central Library, Baroda*

AND

LALCHANDRA B. GANDHI,

*Jain Pandit, Central Library, Baroda*

WITH AN INTRODUCTION BY THE LATTER

1926

CENTRAL LIBRARY

BARODA



H. H. THE MAHARAJA SAYAJIRAO GAEKWAD OF BARODA.
Golden Jubilee 1875-1925.

PUBLISHED

ON THE OCCASION OF THE

# GOLDEN JUBILEE

OF

HIS HIGHNESS

## SIR SAYAJI RAO GAEKWAD,

G.C.S.I., G.C.I.E., HON. LL.D.,

## Sena Khaskhel Shamsher Bahadur,

MAHARAJA OF BARODA

 

# नलविलासनाटक-पात्रपरिचयः ।

**नलः**— निषधाधिपतिः

**दमयन्ती**—विदर्भाधिपतिभीमरथस्य पुत्री नलनृपस्य पत्नी

**किम्पुरुषः**—नलनृपस्यामात्यः

**कूबरः**—युवराजो निषधस्य सुतः

**भीमरथः**—विदर्भाधिपतिर्दमयन्त्याः पिता

**पुष्पवती**—भीमरथस्य पत्नी दमयन्त्या माता

**कलहंसः**—नलवयस्यः

**खरमुखः**—विदूषकः

**कोरकः**—राजभाण्डागारिको नलसत्कः

**सिंहलकः**
**माकन्दः** } —राजपुरुषौ नलपरिग्रहे

**शेखरः**—मत्तमयूरोद्यानरक्षकः

**लम्बोदरः**—कापालिको घोरघोणस्य शिष्यः

**चित्रसेनः**—कलचुरिपतिः=चेदिपतिः

**मेषमुखः**—चित्रसेनस्य प्रणिधिर्घोरघोणनामधारी कापालिकः

**कोष्ठकः**—लम्बोदरनामधारी कापालिकः, चित्रसेनस्य चरः, घोरघोणस्यानुचरः

**मकरिका**—करङ्कवाहिनी नलपरिग्रहे

**कपिञ्जला**—विदर्भराजचामरग्राहिणी दमयन्त्याः सखी

**घोरघोणः**—कापालिकः, चित्रसेनस्य चरः

**लम्बस्तनी**—कापालिकघोरघोणस्य भार्या

**कुरङ्गकः**—विदर्भराजपुरुषः

**मुकुलः**—विदर्भराजोद्यानरक्षकः

**कौशलिका**—दमयन्त्या दासी

**वसुदत्तः**—भीमरथस्यामात्यः

**मङ्गलकः**<br>**भद्रः** } —विदर्भराजपुरुषौ

**माधवसेनः**—विदर्भराजान्तःपुरकञ्चुकी

**बलः**—काशीक्षितिपतिः

**विजयवर्मा**—मथुराधिपतिः

**दधिपर्णः**—अयोध्याधिपतिरिक्ष्वाकुकुलीनः

**सपर्णः**—दधिपर्णस्यामात्यः

**जीवलकः**—दधिपर्णनृपपुरुषः

**बाहुकः**—दधिपर्णस्य सूपकारो विपर्यस्तरूपधारी नलः

**ऋतुपर्णः**—अचलपुरस्वामी

**धनदेवः**—अचलपुरनिवासी सार्थवाहः

**गन्धारः**<br>**पिङ्गलकः** } —धनदेवसार्थवाहस्य मनुष्यौ

**भस्मकः**—लम्बोदरः कापालिकः





# प्रस्तावना

**भो भो गीर्वाणवाणीगौरवाभिज्ञा नाटकादिप्रबन्धप्रणयिनः प्राज्ञाः !**

सुप्रसिद्धस्य पुण्यश्लोकस्य श्रीमतो नैषधस्य नलनृपस्य चारुचरितानि प्राचीनैरर्वाचीनैर्भूरिभिर्भारतभूषणैर्भारतीभक्तैर्भारतीयैः कृतिभिः संस्कृत–प्राकृतादिभाषासु काव्य–कथा–चम्पू–नाटकादिभिन्नभिन्नप्रकारैः संक्षिप्त–विस्तृततया भिन्नभिन्नशैल्या विरचितानि दृष्टि–श्रुतिपथमवतरन्ति ।

महासत्या दमयन्त्याः पातिव्रत्यपवित्रचरितपूतानि द्यूतादिदोषदर्शकानि चैतानि जैनैर्जैनेतरैश्च कैः कैर्विबुधैः किं किमभिधानमभिधाय विहितानीति जिज्ञासया कृतायां गवेषणायामद्यावध्यस्माभिर्दृष्टानि ज्ञातानि श्रुतानि चात्र नामोल्लेखपुरःसरं प्रदर्शितानि विज्ञजनप्रमोदावहानीति विचार्य प्रदर्श्यन्ते ।

## नल–साहित्यम् ( सं. ) ।

**नलोपाख्यानम्**—( महर्षिव्यासप्रणीतमहाभारताद्यन्तर्गतम् )[1]
„ ( गुणाढ्यकविविरचितबृहत्कथान्तर्गतम् )
„ ( क्षेमेन्द्रकविविहितभारतमञ्जर्यन्तर्गतम् )[2]
„ ( क्षेमेन्द्रकविनिर्मितबृहत्कथामञ्जर्यन्तर्गतम् )
„ ( सोमदेवभट्टकृतकथासरित्सागरान्तर्गतम् )

**नैषधीयचरितम्**[2]—( महाकविश्रीहर्षरचितम् )

**नल–दमयन्ती–कथा–चम्पूः**—( त्रिविक्रमभट्टकृता )

**नलोदयकाव्यम्**[3]—( कविकालिदास ? रविदेवकृतम् )

**नलाभ्युदयः**[4]—( महाकविवामनभट्टबाणविरचितः )

**नलचरितनाटकम्**—( नीलकण्ठदीक्षितकृतम् सें. ला. सं. पु. संग्रहस्थम् )

**नलानन्दनाटकम्**[5]—( जीवविबुधकृतम् )

**नलवर्णनकाव्यम्**[6]—( लक्ष्मीधरविरचितम् )

**नलभूमिपालरूपकम्**[8]—

**नलविक्रमनाटकम्**—( अष्टाङ्कम् )

**नलचरितकाव्यम्**—

**सहृदयानन्दम्**—( कृष्णानन्दकविकृतम् )

**राघव-नैषधीयम्**—( हरदत्तसूरिरचितम् )

**नल-यादव-पाण्डव-राघवीयम्**[10]—

**नलस्तोत्रम्**[11]—

**दमयन्तीपरिणयकाव्यम्**[12]—

**भैमीपरिणयनाटकम्**[13]—( नलविजयापराभिधं महिसूरराजशास्त्रिमण्डिकलरामशास्त्रिविरचितमाधुनिकम् )

**पुण्यश्लोकोदयनाटकम्**—( देवीशरणकविचक्रवर्तिनि[illegible]माधुनिकम् )

**नल-दमयन्तीयम्**—( इदानीन्तनम् )

---

१ निर्णयसागरादिभ्यः प्रसिद्धिं गतम् । २ निर्णयसागरमुद्रणालयतः प्रसिद्धम् । ३ जीवानन्दविद्यासागरादिभिः प्रसिद्धिं नीतम् । ४ अनन्तशयनसंस्कृतग्रन्थावल्यां प्रसिद्धम् । ५ ऑफ्रेटकृतसूचिपत्र निर्दिष्टम् । ६ बुल्हर–सूचिपत्रे (नं. २८६) निर्दिष्टम् । ७ एतन्निर्दिष्टं ऑपर्टसूचिपत्रे २,८८६९ । ८ शारदातनयविरचिते भावप्रकाशे (गा. ओ. सिरीझ्द्वारा प्रकाश्यमाने) नाम दृश्यते । ९ आपर्टक्यॉटलॉगपुस्तके ( नं. २८६५, ३७९९ ) नाम वीक्ष्यते । १० काव्यनामैतत् ऑपर्टपु० ६५९५ क्रमाङ्के सूचितम् । ११ ऑपर्टसूचिपत्रे (नं. ७४७५) सूचितम् । १२ कील्हॉर्नसूचिपत्रे ( नं. ५८ ) सूचितम् । १३ महिशूरपुरे राजकीयशाखामुद्राक्षरशालायां मुद्रितम् ।

( २ )

## जैनविदुषां सं. प्रा. कृतयः ।

* **नलचरितम्**—( प्रा० गद्यं धर्मसेनगणिविरचितवसुदेव[1]हिण्डी–मध्यमखण्डान्तर्गतम् )

**नलचरितम्**—(श्रीहेमचन्द्राचार्यविरचित[2]त्रिषष्टिशलाकापुरुषचरित्रान्तर्गतम् पर्व ८,स० ३)

* **नलायनमहाकाव्यम्**—( कुबेरपुराणेत्यपराह्वं महाकविमाणिक्यसूरिविरचितम् )

**नलविलासनाटकम्**[3]—( प्रस्तुतं रामचन्द्रसूरिविरचितम् )

**दवदन्तीचरितम्**—( सोमप्रभाचार्यविरचित[3]कुमारपालप्रतिबोधान्तर्गतम् )

**नलोपाख्यानम्**—( देवप्रभसूरिविरचित[4]पाण्डवचरितान्तर्गतम् )

**दवदन्तीचरितम्**—( विनयचन्द्रसूरिरचित[5]मल्लिनाथमहाकाव्यान्तर्गतम् )

* **दवदंतीचरियं**—( प्रा० पत्तनभाण्डागारीयसूचिपत्रे सूचितम् )

* **दमयन्तीप्रबन्धः**—( गद्यः ) } जैनग्रन्थावल्यां सूचितौ ।
* „ ( पद्यः ) }

**दवदन्तीकथा**—(सोमतिलकसूरिविरचित[6]शीलोपदेशमालावृत्त्यन्तर्गता)

„ ( जिनसागरसूरिविरचितायां कर्पूरप्रकर[2]टीकायाम् )

**दमयन्तीकथा**—( शुभशीलगणिविरचित[7]भरतेश्वर–बाहुबलिवृत्त्यन्तर्गता )

**नलचरितम्**—( देवविजयगणिविहित[8]पाण्डवचरितान्तर्गतम् )

„ ( गुणविजयगणिगदित–गद्यनेमिनाथचरितान्तर्गतम् )

सूचितेभ्योऽन्यत्रापि ***हरिवंशपुराण–पाण्डवपुराण–नेमिनाथपुराण–त्रिषष्टिलक्षण-पुराण–जैननैषधीयचरित-कथाकोष–कथावली–नेमिनाथचरित्र–वसुदेव–कनकवत्यादि-**कथान्तर्गतं स्वतन्त्रकथा–चरितरूपं च नल–दमयन्त्याख्यानं सम्भाव्यते ।

---

* एतच्चिह्नाङ्किता ग्रन्था यावज्ज्ञातमद्यावधि मुद्रणेनाप्रसिद्धाः ।

१ अत्रत्यजैनज्ञानमन्दिरे मुनिराजश्रीहंसविजय–शास्त्रसङ्ग्रहे प्रतिः ( कनकवतीलम्भकः प. १३५–१४९ )

२ भावनगरस्थया जैनधर्मप्रसारकसभया प्रकाशितम् ।

३ अनया 'गा. ऑ. सिरीझ्' संस्थया प्रकाशितम् ।

४ निर्णयसागरमुद्रणालयतः प्रसिद्धम् ।

५ यशोविजयजैनग्रन्थमालया, अम्बालास्थयाऽऽत्मानन्दसभया च प्रसिद्धिमानीतम् ।

६ जामनगरस्थेन पं. हीरालालेन प्रकाशिता ।

७ अहम्मदावादस्थया जैनविद्याशालया गूर्जरभाषानुवादरूपा प्रकाशिता ।

८ पण्डितामृतलालेन ( ए. एम्. एण्ड कम्पनी संस्थया ) प्रकाशितम्

नलमहिमप्रख्यापकं नलपाकशास्त्रमपि श्रूयते । गूर्जरभाषायां ऋषिवर्धन( वि. सं. १५१२ )—मुनिमेघराज( वि. सं. १६६४)—नयसुन्दर( वि. सं. १६६५)—समयसुन्दर( वि. सं. १६७३ )—ज्ञानसागरा( वि. सं. १७२० )दिजैनकविभिर्भालण( वि. सं. १५४५ ? )—नाकर—( वि. सं. १५८१)—प्रेमानन्दा( वि. सं. १७२८ ? ४२)दिभिश्च जैनेतरकविभी रासाख्यानादिरूपेण नल—दमयन्तीवृत्तानि पप्रथिरे । महाराष्ट्रभाषायां पं. रघुनाथादिभिरेवमन्यासु देशभाषास्वपीतराण्यपि सम्भवेयुर्लभेरंश्च प्रयत्नशीला गवेषणायां प्रयतेरन् ।

## नलचरित–भेदः ।

महाभारतान्तर्गतनलोपाख्यानादन्यनलचरितग्रन्थेभ्यश्च नलविलासस्य रचनायां विभिन्नता विलोक्यते । महाभारतादौ नलजनकस्य नाम ‘ वीरसेन ’ इति, नलविलासे नलायनं विहाय जैनकर्तृकान्यनलचरितग्रन्थेषु च ‘ निषध ’ इति, नलभ्रातुरभिधा ‘ पुष्कर ’ इति महाभारतादौ, युवराज ‘ कूबर ’ इति वसुदेवहिण्डी-नलविलासादौ; महाभारतादौ नलविलासेऽपि च नलदेशो ‘ निषध ’ इति, वसुदेवहिण्डीप्रभृतिषु तु ‘ कोशल ’ इति दृश्यते ।

महाभारतादौ दमयन्तीजनन्या अभिधानं नेक्ष्यते, वसुदेवहिण्डीप्रभृतिषु ‘ पुप्पदन्ती ’ इति, नलविलासे तु ‘ पुष्पवती ( पुप्फवदी )’ इति निरदेशि । ‘ दमयन्ती ’ इत्यभिधानं महाभारतादौ नलविलासे च समानम्, वसुदेवहिण्डी-हैमात्रि. श. पु. चरित्रादौ तु ‘ दम( व )दन्ती ’ इत्यपि वीक्ष्यते ।

महाभारतादौ नल—दमयन्त्योरनुरागे हंसपक्षी निमित्तकारणम्, नलविलासे कलहंससंज्ञको नलवयस्यः समसूचि । महाभारतादौ वर्णितं लोकपालैः कारितं नलदौत्यं, स्वयंवरे पञ्चनलीत्यादि च नलविलासे वसुदेवहिण्डीप्रभृतिषु च न प्रपञ्चितम् ।

महाभारतादौ दमयन्त्याः कामुको द्यूतद्वारा नल—दमयन्त्योर्वियोगादिदुःखदर्शकश्च कलिः सूचितः, नलविलासे तु तत्स्थाने दमयन्त्यभिलाषुकस्य चेदिराज( कलचुरिपति )चित्रसेनस्य चरकापालिकानां विलसितं विलोक्यते ।

महाभारतादौ दमयन्तीभ्रातॄणां नामानि दर्शितानि नल—दमयन्त्योः सन्ततिसंज्ञा ‘ इन्द्रसेन ’ ‘ इन्द्रसेना ’ चेति, वसुदेवहिण्डीप्रभृतिषु केवलं ‘ पुष्कर( ल )’ इति पुत्रनाम, नलविलासे तु तदप्युपेक्षितम् ।

महाभारतादौ नलरूपविकृतिकारणं कर्कोटकनागः सूचितः, नलविलासे वसुदेवहिण्डीप्रभृतिषु च—देवभूयत्वं गतो नलपिता निषधो भुजगरूपं विधाय नलं विकृतरूपं कृतवान्, देवरूपेण च तद्धेतुं निजस्वरूपं द्वादशवर्षीयं दमयन्त्या वियोगं च सूचितवान् ।

नलो विपद्ययोध्याधिपते ऋतुपर्णस्य पार्श्वेऽवसदिति महाभारतादौ, दधिपर्णस्य निकटे इति नलविलासे, सुंसुमारपुरस्वामिन ऋतुपर्णस्य सन्निधाविति वसुदेवहिण्ड्याम्, सुंसु( शिशु )मारपुर-स्वामिना दधिपर्णस्य समीपे इति हैमत्रि. श. पु. चरित्रादौ दृश्यते ।

नलवियोगे दमयन्ती चेदिराजसुबाहुगृहमाश्रयदिति महाभारतादौ, अचलपुरस्वामिनो रिपुशत्रो(?)र्गृहमिति वसुदेवहिण्ड्याम्, ऋतुपर्णस्य गृहमिति नलविलासे; वसुदेवहिण्डीप्रभृतिषु रिपुशत्रोः( ऋतुपर्णस्य ) पत्नी चन्द्रयशा दमयन्त्या मातृष्वसेति च निरदेशि ।

नलस्य रूपविकृतौ ' बाहुक ' इति नाम महाभारतादौ, नलविलासेऽपि तदेव, वसुदेव-हिण्डीप्रभृतिषु तु ' हुण्डिक ' इति पठ्यते ।

' धनदेव ' इत्यचलपुरगामिसार्थवाहस्याभिधा नलविलासे वसुदेवहिण्डीप्रभृतिषु च समाना ।

महाभारते ' जीवल ' इति ऋतुपर्णनृपसारथिनः संज्ञा, नलविलासे तु दधिपर्णराजपुरुषस्य । हैमत्रि. श. पु. चरित्रे नलविलासे च विदर्भराजपुरुषस्य ' मङ्गल ' इति समाना संज्ञा ।

शीघ्रं शतयोजनगमने नलस्याश्वविद्यायाः प्रभाव इति महाभारतादौ, दिव्यतेजस्वितातप्र-भावात् पवनजयिनो वाजिन इति नलविलासेऽवर्ण्यत । कुण्डिनपुरे नल–ऋतुपर्णयोः प्रवेशः सायंकाले इति महाभारतादौ, तत्र प्रातःकाले प्रवेश इति वसुदेवहिण्ड्यादौ, नल–दधिपर्णयोरिति तु नलविलासेऽवर्णि । नल-दमयन्त्योः पुनः सङ्गमश्चतुर्थे वर्षे इति महाभारतादौ, द्वादशे वर्षे इति नलविलासादौ समसूच्यत ।

महाभारतादौ–' ऋतुपर्णार्थं प्रेषितं बाहुकरूपिनलोपसंस्कृतं पाशवं मांसं प्राश्य नलसिद्ध-मांसपरिचिता दमयन्ती नलमुपलक्षितवतीत्यादि, वसुदेवहिण्डीप्रभृतिषु तु सूर्यपाकामोदनरसव-तीमुपभुज्येति; नलविलासे तु दधिपर्णसूपकारस्य सूर्यपाकविद्याप्रसिद्धिं श्रुत्वा दमयन्ती तत्परीक्ष-णार्थं कलहंसादीन् प्रेषयति स्म । पश्चादलीकस्वयंवरप्रवादं कारयित्वा दधिपर्णमामन्त्र्य नलमाक-र्षितवती, नलमरणप्रवादं श्रुत्वा तु चिताऽधिरोहणं प्रगुणयति, तदैव च दधिपर्णसारथीभूतो नलः कुण्डिनपुरपरिसरं प्राप्य, वृत्तान्तं चाधिगम्य दमयन्त्याः प्रेमप्रकर्षं परीक्ष्य पितृदेवस्मरणाद् बाहु-करूपं विहाय स्वस्वरूपं प्रकाशयति स्मेत्यादि समीक्ष्यते । एवमन्योऽपि चरितभेदो दृश्यते ।

नलविलासस्य नाटकत्वात् तदुचितानीतरपात्राभिधानानि तु कविकल्पितानि प्रतीयन्ते, जैनकर्तृकान्यनलचरितेभ्योऽपि च क्वचिदंशे भिन्नताऽत एवावलोक्यते ।

---

## नलविलासस्य वैशिष्ट्यम् ।

रसोर्मिभिः परिप्लुतं रसिकजनरञ्जकं माधुर्याञ्चितं लालित्यललितमलङ्काराद्यलङ्कृतमोजः-प्रसादप्रभृतिभिः समुचितैः समग्रगुणैः समुपेतं वैदर्भीरीतिप्रधानं सप्ताङ्कसङ्कलितं गर्भाङ्कगौरवितं धीरललितनलनायकं पुनर्दमयन्तीसङ्घटनापर्यन्तसम्बद्धं रमणीयतमं प्रस्तुतमेतन्नलविलासनाटकं त्वपूर्वमिवाद्भुतं प्रतिभास्यति प्रतिभावतां प्रेक्षावतामित्यस्मदाकूतम् ।

दण्डि–वामन–रुद्रट–राजशेखर–भोजदेव–विश्वनाथ–जगन्नाथादिविद्वद्भिर्यस्या रीतेः प्रकृष्टत्वं स्वीयैकाव्यादर्श–काव्यालङ्कार–काव्यमीमांसा–सरस्वतीकण्ठाभरण–साहित्यदर्पण–रसगङ्गाधरादिग्रन्थेषु प्रादर्शि; तामेव वैदर्भीरीतिं

**" वैदर्भी रीतिमहं लभेय सौभाग्यसुरभितावयवाम् ।**
**दमयन्ती वैरस्यं दिशति गिरां या परां लक्ष्मीम् ॥ "**

इत्यनेन प्रारम्भश्लोकेन संसूच्य स्वाभिप्रेतां च तामुररीकृत्य कविपुङ्गवेनैतत् प्रारेभे, तथैव च निर्व्यूढमिति विज्ञातचरं भविष्यति विचक्षण–विशारदानाम् ।

---

१ अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।
तत्र वैदर्भ-गौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥
श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजः—कान्ति-समाधयः ॥
इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ।
एषां विपर्ययः प्रायो दृश्यते गौडवर्त्मनि ॥

—आचार्यदण्डिनः काव्यादर्शे ( प्रथमपरिच्छेदे श्लो० ४०–४२ )

२ रीतिरात्मा काव्यस्य ॥ ६ ॥ विशिष्टा पदरचना रीतिः ॥ ७ ॥ विशेषो गुणात्मा ॥ ८ ॥ सा त्रिधा ॥ ९ ॥

सा चेयं रीतिस्त्रिधा भिद्यते **वैदर्भी** गौडीया पाञ्चाली चेति । किं पुनर्देशविशेषे द्रव्यवद् गुणोत्पत्तिः काव्यानाम् ? येनायं देशविशेषव्यपदेशः । नैव, यदाह—विदर्भादिषु दृष्टत्वात् तत्समाख्या ॥ १० ॥

विदर्भ-गौड–पाञ्चालेषु देशेषु तत्रत्यैः कविभिर्यथास्वरूपमुपलब्धत्वात् तत्समाख्या, न पुनर्देशैः किञ्चिदुपक्रियते काव्यानाम् । तासां गुणभेदाद् भेदमाह—**समग्रगुणा वैदर्भी** ११ ॥

समग्रैरोजः—प्रसादप्रभृतिभिर्गुणैरुपेता **वैदर्भी** नाम रीतिः । अत्र च श्लोकौ—

**अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता ।**
**विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥**

अलङ्कारादिसौभाग्यां तामेकामेव स्तुवन्ति कवयः—

**सति वक्तरि सत्यर्थे सति शब्दानुशासने ।**
**अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥**

तासां पूर्वा ग्राह्या गुणसाकल्यात् ॥ १४ ॥ न पुनरितरे स्तोकगुणत्वात् ॥ १५ ॥ तासां तिसृणां रीतीनां पूर्वा **वैदर्भी** ग्राह्या, गुणानां साकल्यात् ।

—वामनाचार्यकृतौ काव्यालङ्कारसूत्रवृत्तौ ( प्रथमेऽधिकरणे द्वितीयाध्याये )

३ असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी ।
वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया ॥ —रुद्रटः
वैदर्भी--पाञ्चाल्यौ प्रेयसि करुणे भयानकाद्भुतयोः ।
लाटीया-गौडीये रौद्रे कुर्याद् यथौचित्यम् ॥"

—रुद्रटकृते काव्यालङ्कारे ( अ. १५, श्लो० २० )

आख्यातान्युपसर्गैः संसृज्यन्ते कदाचिदर्थाय ।
वृत्तेरसमासाया वैदर्भी रीतिरेकव ॥ —रुद्रटका. ( अ. २, श्लो० ६ )

४ यदत्यर्थं च स ( काव्यपुरुषः) तया (साहित्यविद्यावध्वा) वशंवदीकृतः स्थानानुप्रासवदसमासं योगवृत्तिगर्भं च जगाद सा **वैदर्भी** रीतिः । तां ते मुनय इति समानं पूर्वेण । तत्र वेषविन्यासक्रमः प्रवृत्तिः, विलासविन्यासक्रमो वृत्तिः, वचनविन्यासक्रमो रीतिः ।

—काव्यमीमांसायां तृतीयाध्याये ( पृ. ९ ) राजशेखरः ।

५ वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः ।
रीङ् गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते ॥
वैदर्भी साऽथ पाञ्चाली गौडीयाऽवन्तिका तथा ।
लाटीया मागधिका चेति षोढा रीतिर्निगद्यते ॥
तत्रासमासा निःशेषश्लेषादिगुणगुम्फिता ।
विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥ तासु वैदर्भी यथा—

मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से ! क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥
सेयमसमस्तपदा समस्तश्लेषादिगुणवती **वैदर्भी** रीतिः ।

—महाराजभोजदेवकृते सरस्वतीकण्ठाभरणे
( द्वितीयपरिच्छेदे )

६ माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरुच्य( रिष्य )ते ॥

—साहित्यदर्पणे ( नवमपरिच्छेदे ) विश्वनाथः ।

७ एभिर्विशेषविषयैः सामान्यैरपि च दूषणै रहिता ।
माधुर्यभारभङ्गुरसुन्दरपदवर्णविन्यासा ॥
व्युत्पत्तिमुद्गिरन्ती निर्मातुर्या प्रसादयुता ।
तां विबुधा वैदर्भी वदन्ति वृत्तिं गृहीतपरिपाकाम् ॥

+ अस्याश्च रीतेर्निर्माणे कविना नितरामवहितेन भाव्यम्, अन्यथा तु परिपाकभङ्गः स्यात् ।

—पं० जगन्नाथविरचिते रसगङ्गाधरे ( पृ. ७३ )

## नलविलासस्य माधुर्यम् ।

अस्य प्रस्तावनायां कौमुदी–मित्राणन्दस्यामुखे च सूत्रधारमुखात् कविना यथोच्चारितम्–' प्रबन्धानाधातुम्–' ( नल० श्लो० ३ ) तथैव खल्वत्र नाट्यप्राणाः सर्वेऽपि रसाः स्वस्वभूमिकायां परकोटौ घटिताः प्रतिभान्ति । किञ्च विशेषतोऽत्र पञ्चमे षष्ठेऽङ्के च प्रवाहितः करुणरसस्य प्रकर्षः पर्यार्द्रयत्यभिप्रायविदः पाषाणहृदयानपि ।

नलविलासस्यातीव मनोज्ञं स्वयंवरवर्णनं त्वेतत्कविसमकालीनः सुमतिनाथचरित्र( प्रा. )–कुमारपालप्रतिबोध( प्रा. )–शतार्थवृत्त–सूक्तमुक्तावल्यपरनामसिन्दूरप्रकरादिसमर्थग्रन्थकारः सोमप्रभाचार्योऽपि वि. सं. १२४१ वर्षे प्रणीते जिनधर्मप्रतिबोधापरनामकुमारपालप्रतिबोधे ( गा. ऑ. सिरीझ्द्वारा प्रकाशिते) तदन्तर्गतनलचरिते स्वल्पांशपरिवर्तनेन*समुदतारयत् । तदानीन्तनानां प्रौढग्रन्थकाराणामप्यनुकरणीयत्वेनादरपात्रमिति किं न चेतोहरं प्रभवेदिदमिदानीमिदानीन्तनानाम् ?

---

( १ ) दम०—अज्ज ! परवंचणवसणिणो कासिवासिणो सुच्चंति ।
माधव०—न मेऽस्मिन् मनोरतिरिति × × —नलविलासे पृ. ४८

( १ ) भद्दे ! परवंचणवसणिणो कासिवासिणो सुव्वं( चं )ति ता न मे इमंमि रमइ मणं ति × ×
—कुमारपालप्रतिबोधे पृ. ४९

( २ ) अणिमित्तरोसिरो एस, ता न पारेमि पए पए अणुकूलिदुं । —नल० पृ. ४९

( २ ) + अकारणकोवणा कुंकणा, ता न पारेमि इमं पए पए अणुकूलिउं । कुमारपाल० पृ० ४९

( ३ ) + + तुसारसंभारपणयभीरुयं मे सरीरयं न किं तुमं जाणा( ण )सि ? —नल० पृ. ४९

( ३ ) + तुसारसंभारभीरुयं मे सरीरयं किं न तुमं जाणसि ? । —कु० पृ. ४९

( ४ ) दम०—कपिंजले ! अदिरमणीया तुमए वरमाला विणिम्मिदा ।
माधव०—अप्रतिवचनमेवास्य भूपतेः प्रत्यासः । —नल० पृ. ४९

( ४ ) + कविंजले ! अइरमणीया वरमाला विणिम्मविया । + + अप्पाडिवयणमेव इमस्स नरिंदस्स पडिसेहो
—कु० पृ. ५०

( ५ ) + तादसमाणवयपरिणामस्स नमो एतस्स । —नल० पृ. ५०

( ५ ) + + तायसमाणवयपरिणामस्स नमो एयस्स । —कु० पृ. ५०

( ६ ) अम्मो ! ईदिसं पि कसिणभीसणं माणुसरूवं भोदि ! अज्ज ! तुरिदमग्गदो वच, वेवदि मे हिदयं ।
—नल० पृ. ५१

( ६ ) अम्मो ! एरिसं पि कसिणभं( भी )सणं माणुसाणं रूवं होइ त्ति तुरियं अग्गओ गच्छ । वेवइ मे हियय ।
—कुमार० पृ. ५०

( ७ ) हीमाणहे ! परिस्संत म्हि एदिणा सयंवरमंडवभूमिविहरणेण, किच्चिरं अज्ज वि अज्जो माधवसेणो जंपिस्सदि ? —नल० पृ. ५२

( ७ ) हद्धि ! परिस्संत म्हि इमिणा सयंवरमंडवसंचरणेण, ता किच्चिरं अज्ज वि भद्दा जंपिस्सइ ?
—कुमारपाल० पृ. ५०

## नलविलास-सूक्तयः ।

नलविलासे वर्णितानि सन्ध्या-चन्द्रोदयादिवर्णनानि, नायक-नायिकादीनां वक्रोक्ति-गूढभणिति-वैदग्ध्यविलसितानि, प्रसङ्गोचितानि व्यवहारोपयोगीनि शिक्षासूत्राणीवार्थगाम्भीर्यभृतानि सुभाषितानि पद्यानि, हृद्यानि च गद्यानि विचारकपाठकानामतीवप्रमोदप्रदानि विज्ञानकलाकौशल-प्रवर्धकानि च प्रभवेयुः। नाट्यादिविषयकाणि कानिचित् तु तत उद्धृत्य वर्णिकामात्रमत्रापि प्रदर्श्यन्ते ।

**नाट्योपयोगि—**

नाट्ये रसस्यैव प्राधान्यमिति स्वाभिप्रेतं मतं समसूचि नाट्यलक्षणनिर्माणनिष्णातेनानेन सूरिणाऽत्र प्रसङ्गतः । तद् यथा—

" सपर्णः–देव ! **रसप्राणो नाट्यविधिः । वर्णार्थबन्धवैदग्धीवासितान्तःकरणा ये पुनरभिनेयेष्वपि प्रबन्धेषु रसमपजहति विद्वांस एव ते, न कवयः ।**

**न तथा वृत्तवैचित्री श्लाघ्या नाट्ये यथा रसः ।**
विपाककम्रमप्याम्रमुद्वेजयति नीरसम् ॥ "—नल० पृ. ७७

प्रसङ्गोचिताश्चान्या अपि नाटक-रूपक-नटादिभावगर्भिता उपमा उपक्षिप्ताः प्रेक्ष्यन्तेऽत्र यथा—

" **नाटकस्येव प्रमदाद्भुतरसशरणं सम्भावयामि निर्वहणम् ।** "

—नल० पृ. ४९

" आमन्त्रिता वयमतः प्रमदः परेऽपि
सन्त्यागताः क्षितिभुजोऽथ विषादतापः ।
**अङ्गं विधानमिव सन्धिषु रूपकाणां**
तुल्यं स्वयंवरविधिः सुख-दुःखहेतुः ॥ "

—नल० पृ. ३०

" तदिदमनिशं स्मारं स्मारं कुशीलववन्मनो
हसति रमते रोदित्युच्चैर्विषीदति सीदति ॥ "—नल० पृ. ४९

" कलहंसः—अहो ! विकटस्य संसारनाटकस्य **परस्परविरुद्धरससमावेशवैरस्यम् !** **शृङ्गराद्भुतरस**निस्यन्दसुन्दरः क्व नाम स **स्वयंवरविवाहमहोत्सवाडम्बरः**, क्व चैष परम-**करुणरस**प्रावीण्यप्रणयपिच्छिलो दुरोदरप्रवर्तितो दमयन्तीमात्रपरिकरस्य देवस्य **निषधाधिपतेः प्रवासवैशसोपप्लवः ।** "

—नल० पृ. ५९

अनेकान्तवादः—

" भजन्ते कार्याणि प्रकृतिविभवं कारणगतं
प्रवादो लोकानां ध्रुवमयमनेकान्तकलुषः।
मृदुत्वं तत् किञ्चिज्जलदपयसां विश्वविदितं
स कश्चिन्मुक्तानामथ च किल काठिन्यनिकषः॥ "—नल० पृ. २७

" सुस्थे हृदि सुधासिक्तं दुःस्थे विषमयं जगत्। वस्तु रम्यमरम्यं वा मनःसंकल्पतस्ततः॥"
—नल० पृ. ९९

कर्मसत्ता—

" तावन्मतिः स्फुरति नीतिपथाध्वनीना
तावत् परोक्तमपि पथ्यतया विभाति।
यावत् पुरा कृतमकर्म न सर्वपर्व–
प्रत्यूहकारि परिपाकमुपैति जन्तोः॥" —नल० पृ. ९९

" तैस्तैः शुभैरशुभैर्वा कर्मभिर्भिन्नवर्तनीसञ्चरिष्णवः सर्वे जन्तवः।"
—नल० पृ. ८२

विद्याजीविनामल्पवेतनिकत्वम्—

" अल्पवेतना हि विद्याजीविनः प्रायेण।
देवीं वाचमविक्रेयां विक्रीणीते धनेन यः।
क्रुद्धेव तस्मै सा मूल्यमत्यल्पमुपढौकयेत्॥" —नल० पृ. ८

प्रेम—

" यस्त्रिजगद्बन्धनेन प्रेम्णा न बध्यते, तस्य मृणालतन्तुपेशलमम्बरं किमादधीत?"
—नल० पृ. ६२

राजधर्मः—

" यतो द्रष्टुं स्त्रीणां वधविधिमयोग्याः क्षितिभुजः।" —नल० पृ. ७६

द्यूतम्—

" दुरोदरकृतः का वा त्रपा का कृपा?" —नल० पृ. ६६

स्थानमहिमा—

" दोषा अप्यतिशेरते क्वचिदपि स्थाने प्ररूढा गुणान्" —नल० पृ. ९१

सदाचारः—

" एगागिणो परमहिलाणं मज्झे गमणं न समुचिदं।" —नल० पृ. १२

तपस्विधर्मः—

" अनुचितं गृहस्थकृत्यचिन्तनं तपस्विनः । " —नल० पृ. ६१

स्त्रीबन्धनम्—

" यद्वा स्त्रियो बन्धनम् " —नल० पृ. ६६

" भुजमात्रपरिच्छदैर्यत्रैव तत्रैव यथैव तथैव स्वैरमास्यते, स्त्रीबद्धानां कुतः कामचारः ?"

—नल० पृ. ६१

दाक्षिणात्याया अभिज्ञानम्—

" यथेदं मौक्तिकप्रायमाभरणम्, यथा दन्तपत्राञ्चितौ कर्णपाशौ; तथा जाने दाक्षिणात्यायाः कस्या अपि योषितः प्रतिकृतिरियम् " —नल० पृ. १०

सूर्यग्रहणसमयः—

" न नाम सैंहिकेयोपरागे सवितैव केवलं क्लाम्यति, किन्तु तदधीनाशेषव्यवहारविशेषमखिलमपि काश्यपीवलयम् । " —नल० पृ. ५९

कैतवम्—

" सर्वथा कैतवं निन्द्यं प्रवदन्तु विपश्चितः ।
केवलं न विना तेन दुःसाधं वस्तु सिध्यति ॥
निर्मायो यः कृपालुर्यः सत्यो यः सनयश्च यः ।
प्रायेण तत्र लोकस्य क्लीबबुद्धिर्विजृम्भते ॥ " —नल० पृ. १०

दुर्जनः—

" छिन्नेषु रावणे तुष्टः शम्भुर्दशसु मूर्द्धसु ।
शतेऽपि शिरसां छिन्ने दुर्जनस्तु न तुष्यति ॥" —नल० पृ. ८९

सूक्ति—गीतिगौरवम्—

" अजल्प्यं जल्पामः किमपि किल पाषाणसुहृदां
सदा तेषां भूयाज्जगति पुरुषाणामजननिः ।
असारं संसारं विदधति न सारं प्रतिमुहुः
पिबन्तो ये सूक्तीरथ च कलगीतीर्मधुमुचः ॥
न गीतशास्त्रमर्मज्ञा न तत्त्वज्ञाश्च ये किल ।
अपौरपशुदेश्येभ्यस्तेभ्यः पुम्भ्यो नमो नमः ॥ " —नल० पृ. ३१

## नलविलासस्य समुदाहरणानि ।

नलविलासरचयित्रा श्रीमता रामचन्द्रसूरिणा पं. गुणचन्द्रेण सार्धं विरचितायां स्वोपज्ञनाट्यदर्पणविवृतौ नाटक–प्रकरण–नाटिका–प्रकरणी–व्यायोग–समवकार–भाण–प्रहसन–डिमाङ्केहामृग–वीथीसंज्ञकद्वादशरूपकस्वरूपनिरूपणाय *पञ्चपञ्चाशन्नाटकादिप्रबन्धानामुदाहरणानि प्रादर्श्यन्त । तन्मध्ये च स्वोपज्ञकृतीनामपि दृष्टान्तानि प्रदर्शितानि । किञ्च [1]प्रयोज्य–[2]हेतु–[3]विरुद्धवर्जन–[4]बिन्दु–[5]चूला–[6]पताका[7]ऽवस्था–[8]प्रयत्न-[9]प्राप्त्याशा-[10]विलास–[11]नर्म–[12]प्रतिवाक्श्रेणि–[13]परिभाषा–[14]व्याहार–[15]गुण–[16]दोषव्यत्यय–[17]प्ररोचनाऽऽदिनिदर्शनाय नलविलासस्यांशानुपयोज्य कविरेतस्य गौरवं विशेषतः प्राख्यापयत् ।

---

* नलविलासकर्त्रा नाट्यदर्पणोदाहृतौ निर्दिष्टानि निजान्यनाटकादिनामानीमानि ।

( १ ) अनङ्गवतीनाटिका ( २ ) अनङ्गसेना–हरिनान्दिप्रकरणम् ( श्रीशुक्तिवासकुमारविरचितम् ( ३ ) अनर्घ्यराघवम् ( ४ ) अभिज्ञानशकुन्तलम् ( ५ ) अभिनवराघवम् ( भट्टेन्दुराजशिष्यक्षीरस्वामिविरचितम् ) ( ६ ) अर्जुनचरितम् ( ७ ) इन्दुलेखानाटिका (.८ ) उत्तर( उत्तरराम )चरितम् ( ९ ) उदयनचरितम् ( १० ) उदात्तराघवम् ( ११ ) कादम्बरी ( १२ ) कुन्दमाला ( वीरनागनिबद्धा ) ( १३ ) कुमारसम्भवम् ( १४ ) कृत्यारावणम् ( १५ ) कोशलिकानाटिका ( भट्टश्रीभवनुतचूडाविरचिता ) ( १६ ) चित्रोत्पलावलम्बितकप्रकरणम् ( अमात्यशङ्कुकविरचितम् ) ( १७ ) छलितरामम् ( १८ ) तरङ्गदत्तम् ( १९ ) तापसवत्सराजम् ( २० ) दरिद्रचारुदत्तरूपकम् ( २१ ) देवीचन्द्रगुप्तम् ( विशाखदेवकृतम् ) ( २२ ) नागानन्दम् ( २३ ) पाण्डवानन्दम् ( २४ ) पार्थविजयम् ( २५ ) पुष्पदूषितकम् ( २६ ) प्रतिमानुरुद्धम् ( श्रीभीमदेवसूनुवसुनागकृतम् ) ( २७ ) प्रयोगाभ्युदयम् ( २८ ) बालिकावञ्चितकम् ( २९ ) बृहत्कथा ( ३० ) भारतम् ( ३१ ) मनोरमावत्सराजम् ( भीमटविरचितम् ) ( ३२ ) मायापुष्पकम् ( ३३ ) माल( वि )काऽग्निमित्रम् ( ३४ ) मालती–माधवम् ( भवभूतिरचितम् ) ( ३५ ) मुद्राराक्षसम् ( ३६ ) मृच्छकटिका ( श्रीशूद्रकविरचिता ) ( ३७ ) रत्नावली ( ३८ ) राधाविप्रलम्भम् ( रासकाङ्कं भेज्जलविरचितम् ) ( ३९ ) विक्रमोर्वशी ( ४० ) विधिविलसितम् ( ४१ ) विलक्षदुर्योधनम् ( ४२ ) वीरचरितनाटकम् ( ४३ ) वेणीसंहारम् ( ४४ ) स्वप्नवासवदत्तम् ।

१ " यत् पुनरुत्तररामचरिते रामोत्सङ्गनिषण्णायाः सीतायाः, अस्मदुपज्ञे **नलविलासे** अरण्ये दमयन्त्याश्च शयनं प्रयुक्तं तत् प्रस्तुतोपयोगित्वात् रञ्जकत्वाच्च न दुष्टम् । "

—नाट्यदर्पणविवृतिः ( आग्रास्थविजयधर्मलक्ष्मीज्ञानमन्दिरीया प्रतिः प. ७ )

२ " यथा रत्नावल्यां प्लवगसम्पातः सागरिकानुरागबीजस्य फलकस्य सम्प्राप्तिहेतुः, यथा वाऽस्मदुपज्ञे **नलविलासे** कापालिक-विदूषकनियुद्धं राज्ञोऽनुरागमूलस्य दमयन्तीप्रतिकृतिदर्शनस्य हेतु । "

—ना. द. वि. प. ८

३ " यथा **नलविलासे** धीरललितस्य नायकस्य दोषं विना सधर्मचारिणीपरित्यागोऽनुचित इति कापालिकप्रयोगेण निबद्धः । "

—ना द. वि. प. ९

४ " यथा वा **नलविलासे** चतुर्थे स्वयंवराङ्के नेपथ्ये बन्दी विन्यस्य-[ श्लो० २४ ] इति । "

—ना. द वि. प. १०

५ " यथा वा **नलविलासे** द्वितीयाङ्कस्यादौ 'स्वागतं सपरिच्छदाय कलहंसाय । ततः प्रविशति कलहंसो मकरिकाप्रभृतिकश्च परिवारः । ' अत्र नेपथ्यपात्रेण पुंसा शेखरेण कलहंसादिवस्तुनः सूचनात् चूलेति । "

—ना. द. वि. प. १४

नलविलासीयं स्वयंवरवर्णनं सोमप्रभाचार्येण स्वीये कुमारपालप्रतिबोधे समवतारितमिति पूर्वं प्रदर्शितं तथा च सुमतिगणिना वि. सं. १२९५ वर्षे विरचितायां 'गणधरसार्धशतकबृहद्वृत्तौ (पृ. ३०९-११) नामग्राहं नलविलासनाटकस्थानि विदूषकादिवचांसि समुद्धृतानि दृष्टिपथे निपतन्ति । तथाहि—

" तथा च **नलविलासनाटके** विदूषकहास्यकृद्वचांसि । यथा किल निषधाधिपतिर्दृष्टस्वप्नः प्रकृतयुगादिदेवसपर्यः कलहंसादिपरिवार उद्यानक्रीडासरसीसीकरासारस्निग्धच्छायं तरुखण्डमवलोक्य स्वगतं समुचितोऽयं प्रदेशः । " इत्यादिनाऽऽरभ्य " बीहामि एआओ बंभरक्खसाओ । " इति यावत् ( प्रकाशिते नल० पृ. ४-७ ) " पुनरत्रैवाग्रतो **नलविलासे**

---

६ " यथा वा **नलविलासे** विदूषक-कापालिकनियुद्धनिवारणायोद्यतस्य राज्ञो दमयन्तीप्रतिकृतिलाभ इति।"
—ना. प. १७

७ " यथा वा **नलविलासे** प्रथमेऽङ्के नेपथ्यतूर्यध्वनिः । + + + + + यातु । इत्यादीति ।"
—ना. प. २१

८ " यथा वा **नलविलासे** तृतीयेऽङ्के 'राजा ( सत्वरम् )-मकरिके ! प्रभवसि × × × यतस्व' इत्यादीति ।"
—ना. प. २१

९ " यथा वा **नलविलासे** चतुर्थे स्वयंवराङ्के 'नलः-कलहंस ! मकरिके ! फलितः × × × स्वप्नार्थप्रत्याशा ।' इति ।"
—ना. प. ११-२२

१० " यथा वा **नलविलासे** तृतीयाङ्के 'दमयन्ती राजानमवलोक्य स्वगतम् × × × अङ्गचङ्गिमा' इति ।"
—ना. प. ३३

११ " यथा वा **नलविलासे** 'विदूषकः लम्बस्तनीं विलोक्य सभयकम्पं भो रायं ! × × तथा राजा लम्ब० × × × × तिष्ठति' इति ।"
—ना. प. ३५

१२ " यथा वा **नलविलासे** तृतीयेऽङ्के भुजमवलम्बिते राजनि दमयन्ती क्रमादाह 'जइ × × जादा' इति ।"
—ना. प. ३७

१३ " यथा वा **नलविलासे** दमयन्तीं प्रति नलः--'न प्रेम × ×' [ अ. १, श्लो० ९ ]
—ना. प. ५१

१४ " यथा **नलविलासे** लम्बस्तनीकापालिकीं प्रति विदूषकः—'एकं दाव × × का वि' [ अ. २, पृ. २५ ] इत्यादीति ।"
—ना. प. ७२

१५ " यथा **नलविलासे** 'राजा—देवि ! उपालभ्यसे × ×' [ अ. ३, पृ. ४०-४१ ] अत्र स्तब्धता स्तनगुणो दोषीकृतः ।"
—ना. प. ७९

१६ " यथा वा **नलविलासे** 'सर्वेषामपि × ×' [ अ० ३, श्लो० १३ ] अत्र पण्यस्त्रीत्वदोषः शृङ्गारपुष्ट्यर्थं गुणीकृतः ।"
—ना. प. ७९

१७ " यथा वा **नलविलासे** 'कविः काव्ये रामः-' [ अ. १, श्लो० २ ] —ना. प. ८४

---

१ शर-निधि-दिनकरसङ्ख्ये विक्रमवर्षे गुरौ द्वितीयायाम् ।
राधे पूर्णीभूता वृत्तिरियं नन्दतात् सुचिरम् ॥
—गणधरसार्धशतकबृहद्वृत्तिप्रान्ते ।

यथा किल " ' कलहंसः—ततो दमयन्त्या ' इत्यादिनाऽऽरभ्य "लम्बस्तनी × × निष्क्रान्ता" इति यावत् ( नल० पृ. २३–२६ )। तत्रत्य उपयुक्त पाठभेदश्चात्र समुद्ध्रियते—

| पृ. | पं. | नलविलासे. | गणधरसार्धशतकबृहद्वृत्तौ ( पृ. ३०९–११ ) |
|---|---|---|---|
| ४ | २० | समन्ततो वि- | समन्ततोऽवलोक्य |
| ५ | ४ | खल्वयम् | खल्वसौ |
| " | ५ | भाव्यम् | भवितव्यम् |
| " | ७ | गन्तुमिच्छति | पदमुत्क्षिपति |
| " | १३ | —मकाण्डे | —मकाण्ड एव |
| " | " | ज्ञायते | ज्ञायते नूनं |
| " | २० | —चतुर्भागे | —चतुर्थभागे |
| ६ | ६ | कमप्य— | किमप्य— |
| " | ११ | मत्प्रसादस्य फलं | मत्प्रसादफलं |
| " | १७ | ससम्भ्रमं | पुनः ससम्भ्रमं |
| " | २० | दुवारे | दारे |
| " | २२ | वने | कानने |
| " | २३ | —देवावट्ठंभेण तुज्झे इह जेव चिट्ठध | —देवदेवदावट्ठंभेण तुब्भे इध य्येव चिट्ठध। अहं उण नि(न)स्सिस्सं। |
| ७ | ३ | निस्सरिस्सं | नस्सिस्सं |
| " | ९ | तत उत्थायं | तदुत्थाय |
| " | १० | कलहंसो निष्क्रम्य पुनः प्रविशति | कलहंसो निष्क्रम्य पुनः प्रविश्य च देव तपोधनो द्वारि। राजा—सम्भवन्ति तपोधना देवतायतनपावनेषु वनेषु। शीघ्रं प्रवेशय। कलहंसो निष्क्रम्य सतपोधनः प्रविशति। |
| " | १२ | एआओ बंभरक्खसाओ | एदाउ बंभणरक्खसाओ। |
| २३ | १८ | यथा यदि | यदि |
| " | १९ | सा तातं कदा— | तातं सा चित्रसेन[क]दा— |
| " | २३ | क्वासौ | क्वासौ क्वासौ |
| " | २४ | अस्ति मत्त— | मत्त— |
| २४ | ४ | एयाओ | एदाउ |
| " | ७ | कडियडं नच्चावंती | कडिअडं नच्चाविंती |
| " | १३ | जेव | य्येव |
| २४ | १६ | —सियव्वं | —सिदव्वं |

| | | | |
|---|---|---|---|
| २५ | २ | गोणेहिं मुद्दे (द्दे) हिं [वा] | गोणेहि मुदेहि |
| ,, | २२ | –गुणैर्मूटकैरे [ वैं ] षा | [ –गोभिर्मृतैरेषा ] |
| ,, | ६ | तदस्य | तदेतस्य |
| ,, | ८ | मुखं | मुखं च |
| ,, | १२ | पि पिअजणं संपाडेमि | अं जणं संवडावेमि |
| २६ | ४ | इत्थ को वि | पत्तकत्तके ( ? ) वि |
| ,, | ५ | भो भाण्डागारिषु | भो भाण्डागारिकेषु |
| ,, | ७ | एषोऽस्मि | देव एषोऽस्मि |

## महाकविरामचन्द्रः ।

नलविलासरचयितुः कविरत्न–रामचन्द्रस्य कदा कुत्र जन्म–दीक्षाऽऽदि ?, का ज्ञातिः ? का जन्मभूमिः ? माता–पित्रोः किमभिधानमित्यादि विज्ञातुं न किञ्चित् साधनमुपलभामहे । किञ्च प्रबन्धादिषु सिद्धहस्तः कविकर्मकुशलोऽसाधारणप्रतिभासम्पन्नोऽयं कवीश्वरो रामचन्द्रश्चातुर्वैद्यविशारदस्य स्वोपज्ञवृत्तिन्याससमुपेतसाङ्गसं. प्रा.शब्दानुशासन–काव्यानुशासन–छन्दोऽनुशासन–वादानुशासन–धातुपारायण –द्व्याश्रयमहाकाव्य–देशीनाममालाऽभिधानचिन्तामण्यनेकार्थसङ्ग्रह–निघण्टु–सप्तसन्धानमहाकाव्य–त्रिषष्टिशलाकापुरुषचरित—परिशिष्टपर्व–योगशास्त्र–वीतरागस्तोत्र–महादेवस्तोत्र –द्वात्रिंशिकाद्वयार्हन्नीति—प्रमाणमीमांसाप्रभृतिप्रणेतुर्गूर्जरेश्वरसिद्धराजसम्मानितस्य कुमारपालभूपालप्रतिबोधकस्य सुप्रसिद्धजैनाचार्यश्रीहेमचन्द्रस्य शिष्यत्वं तु स्वयं प्रतिपादयति सूत्रधारमुखेनात्रान्यत्र च स्वकृतिसन्दर्भे + ।

---

+ १ सूत्र०––दत्तः श्रीमदाचार्य**हेमचन्द्र**स्य शिष्येण **रामचन्द्रेण** विरचितं **नलविलासा**भिधानमाद्यं रूपकमभिनेतुमादेशः । ––नलविलासस्य आमुखे ।

२ श्री**सिद्धहेमा**भिधानशब्दानुशासनवेधसः श्रीमदाचार्य**हेमचन्द्र**स्य शिष्येण **रामचन्द्रेण** विरचितं **सत्यहरिश्चन्द्रा**भिधानमादिरूपकमभिनीय सभाजनमनुरञ्जयिष्यामः । ––सत्यहरिश्चन्द्रस्य प्रस्तावनायाम् ।

३ मारिष ! श्री**सिद्धहेमचन्द्रा**भिधानशब्दानुशासनविधानवेधसः श्रीमदाचार्य**हेमचन्द्र**स्य शिष्ये( ष्यं ) **रामचन्द्र**मसि( ? भि )जानासि ?। चन्द्र०––( साक्षेपम् )––

**पञ्चप्रबन्ध**मिषपञ्चमुखानकेन
विद्वन्मनःसदसि नृत्यति यस्य कीर्तिः ।
**विद्यात्रयीचणमचुम्बितकाव्यतन्द्रं**
कस्तं न वेद सुकृती किल **रामचन्द्रम्** ।

किन्तु **द्रव्यालङ्कार**नामा प्रबन्धोऽनभिनेयत्वेन तावदास्ताम् । अपरेषां **राघवाभ्युदय–यादवाभ्युदय–नलविलास–रघुविलासानां** चतुर्णां रमणीयतम–सदध्र्यङ्गनिवेशानां विशदप्रकृतीनां पुनर्मध्ये कुत्र प्रजानामनुरागः ? —रघुविलासस्य प्रस्तावनायाम् ।

४ श्रीमदाचार्य**हेमचन्द्र**शिष्यस्य **प्रबन्धशत**कर्तु**र्महाकवे रामचन्द्र**स्य भूयांसः प्रबन्धाः ।
––निर्भयभीमव्यायोगस्य प्रस्तावनायाम् ।

५ अस्ति खलु श्री**सिद्धहेमचन्द्रा**भिधानशब्दानुशासनविधानवेधसः श्रीमदाचार्य**हेमचन्द्रस्य** शिष्येण **प्रबन्धशत**विधाननिष्णातबुद्धिना **नाट्यलक्षण**निर्माणापातावगाढसाहित्याम्भोधिना विशीर्ण**काव्य**निर्माणतन्द्रेण

## हेमचन्द्रसूरेः पट्टधरत्वम् ।

श्रीसिद्धराजराजेन जिज्ञासया पृष्टे श्रीहेमचन्द्राचार्येण ' स्वपट्टयोग्यो गुणाधिकः शिष्यः कृतिशेखरो रामचन्द्र ' इति न्यवेदि दिदृक्षायां तं च प्रादर्शीत्यादिवृत्तान्तो वि. सं. १३३४ वर्षे प्रभाचन्द्रसूरिणा रचितस्य प्रभावकचरितस्य निम्नदर्शितोल्लेखादधिगम्यते—

" राज्ञा श्रीसिद्धराजेनान्यदाऽनुयुयुजे प्रभुः ।
भवतां कोऽस्ति पट्टस्य योग्यः शिष्यो गुणाधिकः ? ॥
तमस्माकं दर्शयत चित्तोत्कर्षाय मामिव ।
अपुत्रमनुकम्पार्हं पूर्वं त्वां मा स्म शोचयन् ॥
आह श्रीहेमचन्द्रश्च न कोऽप्येवं हि चिन्तकः ।
आद्योऽप्यभूदिलापालः सत्पात्राम्भोधिचन्द्रमाः ॥
सज्ज्ञानमहिमस्थैर्यं मुनीनां किं न जायते ? ।
कल्पद्रुमसमे राज्ञि त्वयीदृशि कृतस्थितौ ॥
अस्त्यामुष्यायणो रामचन्द्राख्यः कृतिशेखरः ।
प्राप्तरेखः प्राप्तरूपः सङ्घे विश्वकलानिधिः ॥
अन्यदाऽदर्शयंस्तेऽमुं क्षितिपस्य स्तुतिं च सः ।
अनुक्तामाद्यविद्वद्भिर्हृल्लेखाधायिनीं व्यधात् ॥

तथाहि— * ' मात्रयाऽप्यधिकं किं( कं )चिन्न सहन्ते जिगीषवः ।
इतीव त्वं धरानाथ ! धारानाथमपाकृथाः ॥ '
शिरोधूननपूर्वं च भूपालोऽत्र दृशं दधौ ।
रामे वामेतराचारो विदुषां महिमस्पृशाम् ॥
एकदृष्टिर्भवान् भूयाद् वत्स ! जैनेन्द्रशासने ।
महापुण्योऽयमाचार्यो यस्य त्वं पदरक्षकः ॥"

—प्रभावकचरिते ( नि. सा. प्रकाशिते पृ. )

' सिंहस्य शिशुः सिंह एव ' इति लोकोक्तिं सफलयन् प्रौढपाण्डित्यशालिनः शिष्योऽयमपि तथैवेति न नाम विस्मयावहम् । किञ्च श्रीमद्भिर्गुरुभिः स्वपट्टधुरन्धरत्वेन प्रकल्पितो गुरुगौरवकार्यसौ गुर्वभीष्टकार्यनिर्वहणेन निजां पट्टधुरन्धरतां प्रख्यापयत्येव । मन्ये नाटकप्रबन्धादिषु सफलप्रयत्नं पटिष्ठमेनं स्वशिष्यरत्नं विज्ञायैव तत्र गुरुभिर्न प्रयतितं स्यात् ।

---

श्रीमता **रामचन्द्रेण** विरचितं कुतूहलसहस्रनिधानं **कौमुदी-मित्राणन्दा**भिधानं निःशेषरसभावप्रदीपकं द्वितीयं रूपकम् । —कौमुदी-मित्राणन्दस्य आमुखे ।

' **शब्द-प्रमाण-साहित्य-छन्दो**लक्ष्मविधायिनाम् ।
श्री**हेमचन्द्र**पादानां प्रसादाय नमो नमः ॥ —नाट्यदर्पणविवृतिप्रान्ते ।

* अयं श्लोकः सिद्धहेमबृहद्वृत्ति( अ. ५, पा. ३ )प्रान्तेऽपि दृश्यते ।

## कविरामचन्द्रस्य सतीर्थ्याः ।

कलिकालसर्वज्ञहेमचन्द्राचार्यस्य शिष्या महेन्द्रसूरि–गुणचन्द्रगणि–वर्धमानगणि–देवचन्द्रमुनि–यशश्चन्द्रोदयचन्द्र–बालचन्द्रादयः पं. रामचन्द्रस्य सतीर्थ्या आसन् । तत्र च–

**महेन्द्रसूरिः**—अनेन सूरिणाऽनेकार्थकैरवाकरकौमुदीसंज्ञिता हैमानेकार्थसङ्ग्रहटीका गुरुनाम्नैव प्रतिष्ठिता[1] । सोमप्रभाचार्येण वि. सं. १२४१ वर्षे समापितो[2] जिनधर्मप्रतिबोधापरनाम-कुमारपालप्रतिबोधग्रन्थोऽनेन सूरिणाऽश्रावि[3] ।

**गुणचन्द्रगणिः**—पं. रामचन्द्रस्य परमप्रीतिपात्रं समविद्यागुणशीलः प्रतीयते, यतोऽनेन साकं कविरामचन्द्रेण स्वोपज्ञद्रव्यालङ्कारवृत्ति–नाट्यदर्पणविवृती विहिते विलोक्येते । एतेन गणिनाऽपि सोमप्रभाचार्यसन्दर्भितः कुमारपाल( जिनधर्म )प्रतिबोधः श्रुत आसीत्[3] ।

**वर्धमानगणिः**—अयमपि पूर्वोक्तं प्रतिबोधग्रन्थमश्रौषीत्[3] । कुमारविहारप्रशस्तिकाव्य-व्याख्यादिकमनेन निर्ममे[4] ।

**देवचन्द्रमुनिः**—चन्द्रलेखाविजयप्रकरणमनेन प्रणीतम् । जेसलमेरभां० सूची पृ० ६४ इत्यत्रायमस्माभिः परिचायितः ।

**यशश्चन्द्रगणिः**—वि. सं. १३६१ वर्षे मेरुतुङ्गसूरिणा विरचिते प्रबन्धचिन्तामणौ ( स. ४, पृ. २०६–२३३ ) एतस्य नामोपलभ्यते ।

**उदयचन्द्रः**—अस्योपदेशाद् देवेन्द्रसूरिशिष्यो मनीषी कनकप्रभो हैमन्याससारं समुदधरत्[5] ।

**बालचन्द्रः**—अयं रामचन्द्रसूरेः प्रतिस्पर्द्धी, पूर्वमजयपालनरेशस्य मित्रमासीत् । रामचन्द्रसूरिमरणमेतत्कृतमन्त्रभेदादिति प्राचीनप्रवादोऽग्रे प्रदर्शिष्यते । 'स्नातस्याप्रतिमस्य' इत्यादिका प्रसिद्धा स्तुतिरेतस्य कृतिरूपा श्रूयते ।

इतरेऽप्यविदिता अनेके सम्भवेयुः, इतिहासरसिकसज्जनानां सुप्रयत्नेन सुविदिता भविष्यन्ति ।

---

१ श्री**हेम**सूरिशिष्येण श्रीमन्म**हेन्द्र**सूरिणा । भक्तिनिष्ठेन टीकेयं तन्नाम्नैव प्रतिष्ठिता ॥
—अनेकार्थकैरवकौमुदी ।

२ **शशि–जलधि–सूर्य**वर्षे शुचिमासे रविदिने सिताष्टम्याम् ।
**जिनधर्मप्रतिबोधः** क्लृप्तोऽयं **गूर्जरेन्द्रपुरे** ॥ —कुमारपालप्रतिबोधप्रशस्तिः ।

३ **हेम**सूरिपदपङ्कजहंसै**र्महेन्द्र**मुनिपैः श्रुतमेतत् ।
**वर्धमान–गुणचन्द्र**गणिभ्यां साकमाकलितशास्त्ररहस्यैः ॥ —कु. प्र.

४ श्री**हेमचन्द्र**सूरिशिष्येण **वर्द्धमानगणिना कुमारविहारप्रशस्तौ** काव्येऽमुष्मिन् पूर्वं षडर्थे कृतेऽपि कौतुकात् षोडशोत्तरं शतं **व्याख्यानं** चक्रे । P. P. ३, ३१६

५ भूपालमौलिमाणिक्यमालालालितशासनः । दर्शनषट्कनिस्तन्द्रो **हेमचन्द्रो** मुनीश्वरः ॥
तेषा**मुदयचन्द्रो**ऽस्ति शिष्यः सङ्ख्यावतां वरः । यावज्जीवमभूद् यस्य व्याख्या ज्ञानामृतप्रपा ॥
तस्योपदेशाद् **देवेन्द्र**सूरिशिष्यलवो व्यधात् । न्याससारसमुद्धारं मनीषी **कनकप्रभः** ॥
—हैमशब्दानुशासनबृ. न्यासप्रान्ते ।

## कविरामचन्द्रस्य स्वातन्त्र्यप्रियत्वम् ।

नलविलासस्य प्रस्तावनायां सूचितमेतत्—' भाव ! अयं कविः स्वयमुत्पादक उताहो परोपजीवकः ? ' इति नटप्रश्नस्य प्रत्युत्तरे " सूत्रधारः—अत्रार्थे तेनैव कविना दत्तमुत्तरम्—

जनः प्रज्ञाप्राप्तं पदमथ पदार्थं घटयतः
परार्ध्वाध्वन्यान् नः कथयतु गिरां वर्तनिरियम् ।
अमावास्यायामप्यविकलविकासीनि कुमुदा-
न्ययं लोकश्चन्द्रव्यतिकरविकासीनि वदति ॥

अपि च शपथप्रत्येयपद-पदार्थसम्बन्धेषु प्रीतिमादधानं जनमवलोक्य जातखेदेन तेनेदं चाभिहितम्—

स्पृहां लोकः काव्ये वहति जरठैः कुण्ठिततमै-
र्वचोभिर्वाच्येन प्रकृतिकुटिलेन स्थपुटिते ।
वयं वीथीं गाढुं कथमपि न शक्ताः पुनरिमा-
मियं चिन्ता चेतस्तरलयति नित्यं किमपि नः ॥ "

अनेन पद्यद्वयेन कविप्रवरस्यास्य स्वतन्त्रनूतनकृतिपटुता प्रतीयते, तथा च कविकीर्त्यसहिष्णुजनस्याश्रद्धेयप्रलापोऽपि ध्वन्यते ।

कविसमयेऽप्येतादृशः कविनामधारिणोऽभूवन्, येऽन्यकविकृत्यंशानुपादाय स्वनामकीर्तनमकुर्वन् । एतदर्थं कविनाऽन्यत्रापि स्वहृदयोद्गारः प्रकाशितोऽवलोक्यते—

' विद्वानपि यथा हास्यः परकाव्यैः कविर्भवन् ।'

—जिनस्तोत्रे ।

" अकवित्वं परस्तावत् कलङ्कः पाठशालिनाम् ।
अन्यकाव्यैः कवित्वं तु कलङ्कस्यापि चूलिका ॥ "

—नाट्यदर्पणविवृतिप्रारम्भे ।

" परोपनीतशब्दार्थाः स्वनाम्ना कृतकीर्तयः ।
निबद्धारोऽधुना तेन को नौ क्लेशमवेप्याते ? ॥ "

—नाट्यदर्पणविवृतिप्रान्ते ।

" परोपनीतशब्दार्थाः स्वनाम्ना कृतकीर्तयः ।
निबद्धारोऽधुना तेन विश्रम्भस्तेषु कः सताम् ? ॥ "

—कौमुदीमित्राणन्दस्यामुखे ।

किञ्च काव्यप्रबन्धादिवर्त्मनि स्वतन्त्रेण प्रायः सर्वामपि स्वां कृतिं स्वातन्त्र्यमुद्राङ्कितां कुर्वताऽनेन कविरत्नेन स्वीयं स्वातन्त्र्यप्रियत्वं प्रख्यापितम् । तच्च निम्नोद्धृतांशदर्शनेन पाठकानां प्रतीतं प्रभविष्यति—

काव्यं चेत् सरसं किमर्थममृतं वक्त्रं कुरङ्गीदृशां
चेत् कन्दर्पविपाण्डुगण्डफलकं राकाशशाङ्केन किम् ? ।
**स्वातन्त्र्यं** यदि जीविताविधि मुधा स्वर्भूर्भुवो वैभवं
वैदर्भी यदि बद्धयौवनभरा प्रीत्या सरस्त्याऽपि किम् ? ॥

—नलविलासे ( अ० २, श्लो० २ )

अनुभूतं न यद् येन रूपं नावैति तस्य सः ।
न **स्वतन्त्रो** व्यथां वेत्ति परतन्त्रस्य देहिनः ॥

—नल० ( अ० ६, श्लो० ७ )

नलविलासप्रान्ते—

दुरोदरकलङ्कतः कृतविराम **चन्द्रो**ज्ज्वला—
मवाप्य निजसम्पदं पदमचिन्त्यशर्मश्रियः ।
यशोभिरनिशं दिशः कुमुदहासभासः सृजन्
अजातगणनाः समाः परमतः **स्वतन्त्रो** भव ॥

सत्यहरिश्चन्द्रप्रान्ते—

परप्रणयदैन्यतः कृतविराम **चन्द्रो**ज्ज्वला—
मवाप्य निजसम्पदं पदमचिन्त्यशर्मश्रियः ।
यशोभिरनिशं दिशः कुसुमहासभासः सृजन्
अजातगणनाः समाः परमतः **स्वतन्त्रो** भव ॥

यादवाभ्युदयप्रान्ते—

कल्याणं भूर्भुवःस्वः प्रसरतु विपदः प्रक्षयं यान्तु सर्वाः
सन्तः श्लाघां भजन्तामपचयमयतां दुर्मतिर्दुर्जनानाम् ।
धर्मः पुष्णातु वृद्धिं सकलयदुमनःकैरवा**रामचन्द्रः**
प्राप्य **स्वातन्त्र्य**लक्ष्मीं मुदमथ वहतां शाश्वतीं यादवेन्द्रः ॥

निर्भयभीमव्यायोगप्रान्ते—

भूयासुः सत्कवीनां रसरसनपराः काव्यवाचः प्रवाचः
प्रत्याशं यान्तु हेलाविफलितसुजना दुर्जना नाशमाशु ।
धर्मः पुष्णातु वृद्धिं कुरुकुलकमला**रामचन्द्रः** सुधार्द्रां
प्राप्य **स्वातन्त्र्य**लक्ष्मीमनुभवतु मुदं शाश्वतीं भीमसेनः ॥

कौमुदी-मित्राणन्दप्रान्ते—

उपनतमित्रकलत्रः सन्तप्तारामचन्द्रकरविशदाम् ।
आसाद्य यशोलक्ष्मीं परां स्वतन्त्रश्चिरं भूयाः ॥

द्रव्यालङ्कारप्रान्ते—

पूर्वैर्यस्य समुद्धृतिर्न विहिता धीरैः कुतोऽप्याशया-
दावाभ्यां स समुद्धृतः श्रुतनिधेर्द्रव्योत्करो दुर्लभः ।
एनं यूयमनन्तकार्यनिपुणं गृह्णीत तत् कोविदाः !
स्वातन्त्र्यप्रसवां यदीच्छत चिरं सर्वार्थसिद्धिं हृदि ॥

—जेसलमेरभां० सूची ( पृ. ११ )

जिनस्तोत्रप्रान्ते-

स्वतन्त्रो देव ! भूयास सारमेयोऽपि वर्त्मनि ।
मा स्म भूवं परायत्तस्त्रिलोकस्यापि नायकः ॥

स्वामिन्ननन्तफलकल्पतरोऽतिराम चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुतांह्रिसरसीरुह ! दुःस्थसार्थे देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥

जिनस्तव( षोडशिका )प्रारम्भे—

स्वातन्त्र्यश्रीपवित्राय परमब्रह्ममूर्तये ।
साधिताशेषसाध्याय नमो भगवतेऽर्हते ॥

अन्यत्रापि—

सूक्तयो रामचन्द्रस्य वसन्तः कलगीतयः ।
स्वातन्त्र्यमिष्टयोगश्च पञ्चैते हर्षवृ( सृ )ष्टयः ॥

—सत्यहरिश्चन्द्रप्रस्तावनायाम् ।
—निर्भयभीमव्यायोगेऽपि ( श्लो० २ )

## कविरामचन्द्रस्य 'कविकटारमल्ल' बिरुदम् ।

पं. रामचन्द्रस्य बाल्येऽपि शीघ्रकवित्वशक्तिं परी[illegible] प्रसन्नेन गूर्जरेश्वरचौलुक्य-श्रीसिद्धराजजयसिंहदेवेनास्मै 'कविकटारमल्ल' बिरुदं सर्वसमक्षमुपदीकृतमित्यवसीयते वि. सं. १५१७ वर्षे भोजप्रबन्धादिप्रणेतृ रत्नमन्दिरगणेरुपदेशतरङ्गिण्यन्तर्गतोल्लेखतः—

" तथा **रैवतोद्धार**कारक**श्रीसज्जन**दण्डनायक-२४ प्रासादकारकमं० **आभट**-देव-गुरुदृढभक्तमं० **आलिग**-मं० **सांतू**-९९ लक्षहाटकस्वामी श्रे० **छाडा**-षट्कोटिद्रव्यस्वामि-**कुबेरदत्तादि**-कोटीध्वजाष्टादशशतव्यवहारि-**शाकम्भरीपति**-**अर्णोराज**-लाटाधिपगजमांगूझा-

लकप्रभृति ७२ राणकपरिकरितश्री**जयसिंह**देवेन ग्रीष्मे क्रीडोद्यानं गतेन मार्गमिलितश्री**रामचन्द्र**-क्षुल्लः पृष्टः–कथं ग्रीष्मे दिवसा गुरुतराः ? । **रामचन्द्रः** प्राह—

देव ! श्रीगिरिदुर्गमल्ल ! भवतो दिग्जैत्रयात्रोत्सवे
धावद्वीरतुरङ्गनिष्ठुरखुरक्षुण्णक्ष्मामण्डलात् ( ली ) ।
वातोद्धूतरजोमिलत्सुरसरित्सञ्जातपङ्कस्थली—
दूर्वाचुम्बनचञ्चुरा रविहयास्तेनाति( नैव ) वृद्धं दिनम् ॥

चमत्कृतेन **सिद्धराजे**नोक्तम्–सद्यो नगरं वर्णय **पत्तना**भिधानम् ।

एतस्यास्य पुरस्य पौरवनिताचातुर्यतानिर्जिता
मन्ये नाथ ! **सरस्वती** जडतया नीरं वहन्ती स्थिता ।
कीर्तिस्तम्भमिषोच्चदण्डरुचिरामुत्सृज्य वाहावली—
तन्त्रीकां गुरु**सिद्ध**भूपतिसरस्तुम्बीं निजां कच्छपीम् ॥

तुष्टेन सर्वसमक्षं ' कविकटारमल्ल ' इति बिरुदं दत्तम् ॥ "

वि. सं. १३६१ वर्षे विरचिते प्रबन्धचिन्तामणौ मेरुतुङ्गसूरिः संक्षिप्ततया सिद्धराज-रामचन्द्रयोः प्रश्न–प्रत्युत्तरमेव केवलमसूचयत्—

" एकदा श्री**सिद्धेन रामचन्द्रः** पृष्टः–' ग्रीष्मे दिवसाः कथं गुरुतराः ? ' **रामचन्द्रः** प्राह–" देव श्रीगिरिदुर्गमल्ल० " इति ।

कविकटारमल्लबिरुदधारिणाऽनेन रघुविलासस्य प्रस्तावनायाम् 'अचुम्बितकाव्यतन्द्रम्' इति, कौमुदीमित्राणन्दस्यामुखे च 'विशीर्णकाव्यनिर्माणतन्द्रेण' इत्यादीनि विशेषणानि सूत्रधारमुखेनात्मनि नियोजयता निजं काव्यप्रेम, काव्यक्रियासु स्वस्य सर्वदाऽप्यविश्रान्तपरिश्रमशीलत्वं च प्रचकाशे । किञ्च कविनाऽनेन नाट्यदर्पणविवृतिप्रारम्भे नाट्य–प्रबन्धकवित्वविषयमधिकृत्य कविशिक्षारूपा विदुषां विचारणीया मनन–परिशीलनार्हाश्च हृद्या हृदयोद्गाराः प्रकाशिताः* ।

* अलङ्कारमृदुः पन्थाः कथाऽऽदीनां सुसञ्चरः । दुःसञ्चरस्तु नाट्यस्य रसकल्लोलसङ्कुलः ॥
न गीत–वाद्य–नृत्तज्ञा लोकस्थितिविदो न ये । अभिनेतुं च कर्तुं च प्रबन्धांस्ते बहिर्मुखाः ॥
स कविस्तस्य काव्येन मर्त्या अपि सुधान्धसः । रसोर्मिघूर्णिता नाट्ये यस्य नृत्यति भारती ॥
नानार्थशब्दलौल्येन पराञ्चो ये रसामृतात् । विद्वांसस्ते कवीन्द्राणामर्हन्ति न पुनः कथाम् ॥
श्लेषालङ्कारभाजोऽपि रसा निःस्यन्दकर्कशाः । दुर्भगा इव कामिन्यः प्रीणन्ति न मनो गिरः ॥
आरङ्काद् भूपतिं यावदौचितीं न विदन्ति ये । स्पृहयन्ति कवित्वाय खेलनं ते सुमेधसाम् ॥
प्राणाः कवित्वं विद्यानां लावण्यमिव योषिताम् । **त्रैविद्यवेदिनो**ऽप्यस्मै ततो नित्यं कृतस्पृहाः ॥
नासिकान्ते द्वयं श्वित्रं द्वयोर्व्रीडा रसज्ञयोः । कुचाभावः कुरङ्गाक्ष्याः काव्याभावो विपश्चितः ॥
अकवित्वं परस्तावत् कलङ्कः पाठशालिनाम् । अन्यकाव्यैः कवित्वं तु कलङ्कस्यापि चूलिका ॥
कवित्ववन्ध्याः क्लिश्यन्ते सुखाकर्तुं जगन्ति ये । नेत्रे निमील्य विद्वांसस्तेऽधिरोहन्ति पर्वतम् ॥
—नाट्यदर्पणविवृतिप्रारम्भे ( श्लो० ३–१२ )

## कविरामचन्द्रस्य काव्यप्रबन्धादिगुणदोष—परीक्षणविचक्षणता ।

एकदिनप्रणीतमहाप्रबन्धेन सिद्धराजप्रतिपन्नबन्धुना हेमचन्द्रसूरीयद्विसन्धानमहाकाव्य-संशोधकेन श्रीपालकविराजेन सिद्धराजनृपकारितसहस्रलिङ्गसरोवरस्य रचितायां प्रशस्तावन्य-विदुषामगोचरं दूषणद्वयं दर्शितमासीदनेन विपाश्चितेत्यवगम्यते प्रबन्धचिन्तामणितः—

" अथ **श्रीपाल**कविना सहस्रलिङ्गसरोवरस्य रचितायां प्रशस्तिपट्टिकायामुत्कीर्णायाम् ।

तत्स्थकाव्यमिदम्—

न मानसे माद्यति मानसं मे पम्पा न सम्पादयति प्रमोदम् ।
अच्छोदकाच्छोदकमत्र सारं विराजते कीर्तित**सिद्ध**भर्तुः ॥ १ ॥

तत्प्रशस्तिशोधनाय सर्वदर्शनेष्वाहूयमानेषु श्री**हेमचन्द्राचार्यैः** सर्वविद्वज्जनानुमते प्रशस्ति-काव्ये भवता वैदग्ध्यं किमपि न प्रकाशयमित्युक्त्वा पण्डित**रामचन्द्रो**ऽनुशिष्य तत्र प्रहितः ।

---

१ **एकाहनिष्पन्नमहाप्रबन्धः** श्री**सिद्धराज**प्रतिपन्नबन्धुः ।
**श्रीपाल**नामा कविचक्रवर्ती सुधीरिमं शोधितवान् प्रबन्धम् ॥

—हेमचन्द्रसूरीयद्विसन्धानमहाकाव्यप्रान्ते ।

प्राग्वाटान्वयसागरेन्दुरसमप्रज्ञः कृतज्ञः क्षमी
वाग्मी सूक्तिसुधानिधानमजनि **श्रीपाल**नामा पुमान् ।
यं लोकोत्तरकाव्यरञ्जितमतिः साहित्यविद्यारतिः
श्री**सिद्धाधिपतिः** कवीन्द्र इति च भ्रातेति च व्याहरत् ॥

—सोमप्रभाचार्यीयसुमतिनाथचरितप्रान्ते, कुमारपालप्रतिबोधप्रान्तेऽपि ।

सोमप्रभाचार्येण सुमतिनाथचरित–कुमारपालप्रतिबोधयो रचनैतच्छ्रीपालकविसूनोः कुमारपालभूपालप्रीति-पात्रस्य सिद्धपालकवेर्वसतावकारीति प्रतिपाद्यते तेनैव सूरिणा निजकृतिप्रान्ते—

सूनुस्तस्य **कुमारपाल**नृपतिप्रीतेः पदं धीमता—
मुत्तंसः कविचक्रमस्तकमणिः श्री**सिद्धपालो**ऽभवत् ।
यं व्यालोक्य परोपकार–करुणा–सौजन्य–सत्य–क्षमा–
दाक्षिण्यैः कलितं कलौ कृतयुगारम्भो जनैर्मन्यते ॥

तस्य पौषधशालायां पुरेऽणहिलपाटके ।
निष्प्रत्यूहमिदं प्रोक्तं परार्थान्तं.......... ॥—सुमतिनाथचरितप्रान्ते ।

" पुत्रस्तस्य **कुमारपाल**नृपतिप्रीतेः पदं धीमता–
मुत्तंसः कविचक्रमस्तकमणिः श्री**सिद्धपालो**ऽभवत् ।
क्लृप्तं तद्वसताविदं किमपि यच्चायुक्तमुक्तं मया
तद् युष्माभिरिहोच्यतामिति बुधा वः प्राञ्जलिः प्रार्थये ॥ "

—कुमारपालप्रतिबोधप्रान्ते

ततः सर्वविद्भिः शोध्यमानायां प्रशस्तौ नृपोपरोधात् **श्रीपाल**कवेर्दाक्ष्य–दाक्षिण्याच्च सर्वेषु काव्येषु मन्यमानेषु ।

‘ कोशेनापि युतं दलैरुपचितं नोच्छेत्तुमेतत् क्षमं
स्वस्यापि स्फुटकण्टकव्यतिकरं पुंस्त्वं च धत्ते नहि ।
एकोऽप्येष करोति कोशरहितो निष्कण्टकं भूतलं
मत्वैवं कमला विहाय कमलं यस्यासिमाशिश्रियत् ॥ ’

विशेषेणास्मिन् काव्ये प्रशस्यमाने श्री**सिद्धराजे**न पृष्टः श्री**रामचन्द्र**श्चिन्त्यमेतदित्यवादीत् । अथ तैरेव सर्वैरनुयुक्तः । एतस्मिन् काव्ये सैन्यवाचको दलशब्दः कमलशब्दस्य नित्यक्लीबत्वमिति दूषणद्वयं चिन्त्यम् । ततः सर्वानपि पण्डितानुपरुध्य दलशब्दो राजसैन्यार्थे प्रमाणीकारितः । कमलशब्दस्य तु लिङ्गानुशासनसिद्धं नित्यक्लीबत्वं केन निर्णीयत इति पुंस्त्वं च धत्ते न वेत्यक्षरभेदः कारितः । ”

---

## कविरामचन्द्रस्य समस्यापूर्तिशक्तिः ।

वाराणसीवासिकविर्विश्वेश्वरो रामचन्द्रसूरेः समस्यापूर्तिशक्तिं पर्यैक्षत पर्यतुष्यच्चेति प्रतीयते प्रबन्धचिन्तामणि–कुमारपालचरितादिप्रेक्षणात् । वि. सं. १३६१ वर्षे मेरुतुङ्गसूरिणा रचिते प्रबन्धचिन्तामणौ ( स० ४, पृ. २२६–२२७ ) उपलभ्यतेऽयमुल्लेखः—

“ कस्मिन्नप्यवसरे **विश्वेश्वर**नामा कविर्वाराणस्याः श्री**पत्तन**मुपागतः श्री**हेम**सूरीणां संसदि प्राप्तः । तत्र **कुमारपाल**नृपतौ विद्यमाने सः

‘ पातु वो **हेम**गोपालः कम्बलं दण्डमुद्वहन् । ’

इति भणित्वा विलम्बमानो नृपेण सक्रोधं निरैक्ष्यत् ।

‘ षड्दर्शनपशुग्रामं चारयन् जैनगोचरे ॥ ’

इत्युत्तरार्धपरितोषितसमाजलोकः श्री**रामचन्द्रा**दीनां [ समस्यां ] समर्पयामास । ”

वि. सं. १५[ २५ ? ] वर्षे विनिर्मिते कुमारपालचरितमहाकाव्ये चारित्रसुन्दरगणिरिमं समस्याप्रसङ्गमधिकृत्येत्थमुल्लिखति स्म—

“ पञ्च लक्षाणि द्रम्माणां दश चोच्चैस्तुरङ्गमान् ।
**विश्वेश्वरा**य कवये तुष्टः श्री**कुमरो** ददौ ॥
सार्धं नृपतिना सोऽथ **विश्वेश्वर**कविर्ययौ ।
श्री**हेम**सूरिशालायां विद्वद्गोष्ठीरसेरितः ॥
आलोक्य संसदं सूरेर्भूरिसूरिजनावृताम् ।
स ब्रह्मपरिषत्तुल्यामेनां मेने कवीश्वरः ॥

सूरिशिष्यपरीक्षायै द्वे समस्ये समार्पयत् ।
' व्याषिद्धेति ' प्रसिद्धाऽऽद्या ' शृङ्गाग्रेणेति ' चापरा ॥
तामाद्यां निरवद्यपद्यरचनाहृद्यः *कपर्दी महा—
मात्यः पूर्वमपूरयद् गुरुतरप्रज्ञाप्रकर्षोद्धुरः ।
कुर्वंस्तन्मनसीति विस्मयभरं श्रीसूरिशिष्यः क्षणाद्
अन्यां मान्यतमोऽनिशं मतिमतां श्रीरामचन्द्रोऽभ्यधात् ॥
' नैतस्याः प्रसृतिद्वयेन सरले ! शक्ये पिधातुं दृशौ
सर्वत्रापि च लक्ष्यते मुखशशिज्योत्स्नावितानैरियम् ।
इत्थं मध्यगता सखीभिरभितो दृग्मीलनात् केलिषु
व्याषिद्धा नयने मुखं च रुदती स्वे गर्हते कन्यका ॥ '
' त्वं नो गोत्रगुरुस्तवेन्दुरधिपस्तस्यामृतं तत्करे
तेन व्याधशरातुरां मम प्रियामेनां समुज्जीवय ।
इत्युक्ते मृगलाञ्छनस्य हरिणे कारुण्यमाजल्पतः
शृङ्गाग्रेण मृगस्य पश्य पतितं नेत्राम्बु भूमण्डले ॥ '
स जहर्ष निजार्थेन ते निपीयाशु पूरिते ।
अहो ! जानाति विश्वेऽस्मिन् कविरेव कवेः श्रमम् ॥ "

## कविरामचन्द्रस्य त्रैविद्याविज्ञत्वम् ।

प्रचुरप्रबन्धप्रबन्धकेनानेन विपश्चिता रघुविलासस्य प्रस्तावनाप्रसङ्गे—
" पञ्चप्रबन्धमिषपञ्चमुखानकेन विद्वन्मनःसदसि नृत्यति यस्य कीर्तिः ।
**विद्यात्रयीचणम**चुम्बितकाव्यतन्द्रं कस्तं न वेद सुकृती किल **रामचन्द्रम्** ? ॥
इति चन्द्रवक्त्रात् प्रोच्चारितेऽस्मिन् श्लोके स्वस्य विद्यात्रयीवित्तत्वं स्पष्टं निवेदितमेव ।
नाट्यदर्पणविवृतिप्रारम्भे—
" प्राणाः कवित्वं विद्यानां लावण्यमिव योषिताम् ।
**त्रैविद्यवेदिनो**ऽप्यस्मै ततो नित्यं कृतस्पृहाः ॥ "
इत्यत्र ' त्रैविद्यवेदिनः ' इति विशेषणं भावगर्भितं व्यज्यते । त्रैविद्यवेदिनोऽस्मा-दृशोऽपीत्येवं ध्वन्यते ।

---

* मेरुतुङ्गसूरिः प्रबन्धचिन्तामणावस्य विनोदप्रबन्धमित्थं निर्दिशति स्म—
" कदाचित् प्रत्यूषे श्री**कपर्दि**मन्त्री प्रणामानन्तरं हस्ते किमेतदिति पृष्टः स प्राकृतभाषया ' हरडइ ' इति विज्ञापयामास । प्रभुभिरुक्तं ' किमद्यापि ? ' आहतप्रतिभतया तद्वचनच्छलमाकलय्य **कपर्दि**नोक्तम् इदानीं न । कुतः ? । अन्त्योऽप्याद्योऽभूत्, मात्राधिकश्च । हर्षाश्रुपरिपूर्णदृशः प्रभवः श्री**रामचन्द्र**प्रभृतिपण्डितानां पुरस्तात् तच्चातुरीं प्रशशंसुः । तैरज्ञाततत्त्वैः किमिति पृष्टो ' ह रडइ ' शब्दच्छलेन हकारो रडइ । किमद्यापीत्यभिहितनात्रेण वचस्तत्त्वविदा नेदानीमुक्तम् । यतः पुरा मातृकाशास्त्रे हकारः प्रान्ते पठ्यते; अत एव ह रडइ । साम्प्रतं त्वस्मन्नाम्नि प्रथमतया मात्राधिकश्च । " इति हरडइप्रबन्धः ॥

नाट्यदर्पणविवरणप्रान्ते तु—

" **शब्दलक्ष्म-प्रमालक्ष्म-काव्यलक्ष्म**कृतश्रमः ।
वाग्विलासास्त्रिमार्गो नौ प्रवाह इव जाह्नुजः ॥ "

उपन्यस्तेऽस्मिन् श्लोके प्रकटं समसूचि गुणचन्द्रेण साकं स्वस्य शब्द–प्रमाण–काव्यरूप-विद्यात्रयीव्यासङ्गित्वम् । तत्र च सिद्धहेमशब्दानुशासनन्यासरचनयाऽस्य शब्दविद्यापरिश्रमः, स्वोपज्ञद्रव्यालङ्कारवृत्तिविरचनेन प्रमाणविद्याप्रयत्नः, नाट्यदर्पण–प्रबन्ध–स्तोत्रादिप्रणयनेन च काव्यसाहित्यविद्याप्रयासः प्रेक्षणक्षणीक्रियते ।

## कवि–प्रशंसा ।

चमत्कृतिप्रियस्य प्रबन्धाब्धिप्रबन्धकस्यास्य रामसाम्येन स्तुतिं विदधाति स्म काव्यप्रकाशसङ्केत–( रचना सं. १२१( ४ )६ )–पार्श्वनाथचरित( रचना सं. १२७६ )–शान्तिनाथचरितादिरचयिता माणिक्यचन्द्रसूरिरपि निजे शान्तिनाथमहाकाव्ये—

" स **रामः** कविरुद्दामः प्रबन्धाब्धिं प्रबध्य यः ।
प्रियां चमत्कृतिं प्रत्याहरति प्रीणयति क्षमाम् ॥ " —पत्तनभां० सूची

किञ्च प्रबन्धशतविधात्राऽनेन विपश्चिता न्याय्यो निजविद्वत्तापरिचयो व्यधायि सूत्रधारादिद्वारा तत्तत्प्रबन्धेष्वपि । समुचितं स्वल्पमत्र तदुद्धरणम्—

' कविः काव्ये **रामः** सरसवचसामेकवसतिः ' —नलविलासे श्लो० २

प्रबन्धानाधातुं नवभणितिवैदग्ध्यमधुरान्
कवीन्द्रा निस्तन्द्राः कति नहि **मुरारि**प्रभृतयः ? ।
ऋते **रामा**न्नान्यः किमुत परकोटौ घटयितुं
रसान् नाट्यप्राणान् पटुरिति वितर्को मनसि नः ॥
—नलविलासे श्लो० ३, कौमुदीमित्राणन्दे श्लो० ४

व्युत्पत्तिर्मुखमेव नाटकगुणव्यासे तु किं वर्ण्यते ?
सौरभ्यप्रसवा नवा भणितिरप्यस्त्येव काचित् क्वचित् ।
यं प्राणान् दशरूपकस्य स करोत्क्षेपं समाचक्षते
साहित्योपनिषद्विदः स तु रसो **राम**स्य वाचां परः ॥
—सत्यहरिश्चन्द्रे श्लो० ३

प्रबन्धा इक्षुवत् प्रायो हीयमानरसाः क्रमात् ।
कृतिस्तु **रामचन्द्र**स्य सर्वा स्वादुः पुरः पुरः ॥
—नलविलासे, सत्यहरिश्चन्द्रे, कौमुदीमित्राणन्देऽपि श्लो० ४

सूक्तयो **रामचन्द्र**स्य वसन्तः कलगीतयः ।
स्वातन्त्र्यमिष्टयोगश्च पञ्चैते हर्षवृ( सृ )ष्टयः ॥
—सत्यहरिश्चन्द्रे श्लो० ५, निर्भयभीमव्यायोगेऽपि श्लो० २

पञ्चप्रबन्धमिषपञ्चमुखानकेन विद्वन्मनःसदसि नृत्यति यस्य कीर्तिः ।
**विद्यात्रयीचण**मचुम्बितकाव्यतन्द्रं कस्तं न वेद सुकृती किल **रामचन्द्रम्** ? ॥
—रघुविलासे

## कविरामचन्द्रस्य प्रबन्धशतकर्तृत्वम् ।

प्रस्तुतकविना कौमुदी-मित्राणन्दस्यामुखे '**प्रबन्धशतविधान**निष्णातबुद्धिना' इत्यादि, तथा निर्भयभीमव्यायोगस्य प्रस्तावनायां '**प्रबन्धशतकर्तुर्महाकवे रामचन्द्रस्य**' इति विशेषणमात्मनि प्रयोजयता स्वस्य प्रबन्धशतकर्तृत्वं प्रकटं पर्यचायि। किन्तु करालकालविलसितेन साम्प्रतं निम्नसूचितानेव प्रबन्धान् तन्मध्यात् कथञ्चिदभिजानीमोऽन्येषां नामान्यपि सम्यग् न जानीमहे ।

गुणचन्द्रद्वितीयेनानेन महाकविना विहितायां स्वोपज्ञनाट्यदर्पणविवृतौ द्वादशरूपकस्वरूपनिरूपणाय प्रदर्शितेषु निजान्यनाटकप्रकरणादिप्रबन्धानामुदाहरणेषु निम्नदर्शितानामेकादशकृतीनां स्वोपज्ञता समदर्श्यस्मदुपज्ञादिशब्दव्यवहरणेन । ताश्चैताः—

( १ ) नलविलासनाटकम् ( एतदेव )
( २ ) सत्यहरिश्चन्द्रनाटकम् ( निर्णयसागरमुद्रणालयतः प्रसिद्धम् )
( ३ ) कौमुदी-मित्राणन्दप्रकरणम् ( भावनगरस्थयाऽऽत्मानन्दसभया प्रकाशितम् )
( ४ ) मल्लिका-मकरन्दप्रकरणम् * ( ५ ) रोहिणी-मृगाङ्कप्रकरणम् *
( ६ ) यादवाभ्युदयम् * ( ७ ) राघवाभ्युदयम् *
( ८ ) रघुविलासम् * ( ९ ) वनमालानाटिका *
( १० ) निर्भयभीमव्यायोगः ( यशोविजयजैनग्रन्थमालया प्रसिद्धिं नीतः )
( ११ ) सुधाकलशः[1] *

एतदतिरिक्ता इमा अपि ज्ञाताः सन्ति—

( १२ ) द्रव्यालङ्कारः ( सवृत्तिकः ) * } गुणचन्द्रेण सह
( १३ ) नाट्यदर्पणम् ( सविवरणम् ) * } गुणचन्द्रेण सह
( १४ ) यदुविलासम् * ( रघुविलासे कविना सूचितम् )
( १५ ) कुमारविहारशतकम् ( भा. आ. सभातः प्रसिद्धम् )
( १६ ) युगादिदेवद्वात्रिंशिका *
( १७ ) व्यतिरेकद्वात्रिंशिका * ( १८ ) प्रसादद्वात्रिंशिका *
( १९ ) आदिदेवस्तवः * ( २० ) मुनिसुव्रतदेवस्तवः *
( २१ ) नेमिस्तवः * (२२–३७) षोडशिकाः साधारणजिनस्तवाः *
( ३८ ) जिनस्तोत्राणि[2] * ( ३९ ) हैमबृहद्वृत्तिन्यासः[3] *

ग्रन्थरत्नगवेषिणो गवेषयिष्यन्ति कविरत्नस्यास्यान्यामप्यज्ञातां कृतिसंहतिम् ।

* एतच्चिह्नाङ्किता ग्रन्था यावज्ज्ञातं मुद्रणादिद्वाराऽप्रसिद्धाः ।
१ 'सुधाकलशाख्यसुभाषितकोशः पं. रामचन्द्रकृतः पत्र...... '—बृहट्टिप्पनिकायाम्
२ वटपद्रीय 'झव्हेरी अंबालाल नानाभाई' श्रेष्ठिगृहसङ्ग्रहे प्रतिः ।
३ 'रामचन्द्रकृतन्यासः ५३००० न ।'—बृ.

## नलविलासस्य रचनासमयः।

अवगाढागाधसाहित्याम्भोधेर्नाट्यलक्षणनिर्माणविचक्षणस्य प्रबन्धशतकर्तुर्महाकवे रामचन्द्रस्यास्यां रचनायां किमिव वक्तव्यमस्मादृशैः स्वल्पप्रज्ञैः ?। किन्त्वत्र तत्कृतीनां पौर्वापर्यं परामृश्य प्रस्तुतनाटकस्य प्रणयनसमयो विचार्यते । नलविलासान्तर्गतानि कानिचित् पद्यानि पात्रनामानि च कवेरन्यकृतावपि दृष्टिगोचरीक्रियन्ते । तथाहि—

| | | | | |
|---|---|---|---|---|
| अकृताखण्डधर्माणाम्— | नलविलासे | ( अ. १, श्लो० १० ) | कौमुदी–मित्राणन्दे | ( अ.१ श्लो० ६,७ ) |
| अपकृत्योपकार्येषु | ,, | ( अ. ७, श्लो० ३ ) | सत्यहरिश्चन्द्रे | ( अ. ३, श्लो० १५ ) |
| अस्तमयति | ,, | ( अ. ५, श्लो० ८ ) | कौमुदीमित्राणन्दे | ( अ. १, श्लो० ८ ) |
| अ(य)स्यां | ,, | ( अ. ४, श्लो० ७ ) | ,, | ( अ. १०, श्लो० १२ ) |
| एते निर्झरझात्कृतैः | ,, | ( अ. ५, श्लो० ९ ) | निर्भयभीमव्यायोगे | ( श्लो० ९ ) |
| चलकमलविलासा– | ,, | ( अ. २, श्लो० ५ ) | कौमुदी–मित्राणन्दे | ( अ. ८, श्लो० ८ ) |
| परिमलभृतो वाताः | ,, | ( अ. ३, श्लो० २ ) | ,, | ( अ. १०, श्लो० ३ ) |
| प्रबन्धानाधातुम् | ,, | ( अ. १, श्लो० ३ ) | ,, | ( अ. १, श्लो० ३ ) |
| मा विषीद | ,, | ( अ. ५, श्लो० ५ ) | ,, | ( अ. ४, श्लो० १७ ) |
| सर्वथा कैतवं निन्द्यम् | ,, | ( अ. २, श्लो० ११ ) | ,, | ( अ. १०, श्लो० ४ ) |
| स्फुरन्त्युपायाः | ,, | ( अ. ५, श्लो० ३ ) | ,, | ( अ. २, श्लो० ९ ) |
| स्वमेकः पर– | ,, | ( अ. ७, श्लो० ७ ) | सत्यहरिश्चन्द्रे | ( अ. ५, श्लो० ११ ) |

तथा च घोरघोणनाम नलविलासे कौमुदीमित्राणन्देऽपि प्रयुक्तम्, एवं लम्बस्तनीनाम नलविलासे सत्यहरिश्चन्द्र—कौमुदीमित्राणन्दयोरपि व्यवहृतम् ।

न चैतावता प्रबन्धानां पौर्वापर्यं वक्तुं सुशकम् । तथाप्येतेषु नलविलासस्य किञ्चित् प्राचीनत्वं प्रतीयते । नाट्यदर्पणे नलविलासस्योदाहरणानि दृश्यन्ते यानि पूर्वं प्रादर्श्यन्त । कौमुदीमित्राणन्द—निर्भयभीमव्यायोगयो रचनासमये कविना प्रबन्धशतं प्रणीतं भवेद् वा प्रणीयमानं सम्भवेद् यतस्तत्र ' प्रबन्धशतविधाननिष्णातबुद्धिना ' ' प्रबन्धशतकर्तुः ' इति विशेषणेन तत् प्रकाशितम् । नलविलासादौ च तादृग् विशेषणं न दृश्यते । नाट्यदर्पणविवृतौ कौमुदी-मित्राणन्दस्योदाहरणानि विद्यन्ते । कौमुदीमित्राणन्दस्य प्रस्तावनायां चोपन्यस्तेन ' नाट्यलक्षणनिर्माणापातावगाढसाहित्याम्भोधिना ' विशेषणेन कौमुदीमित्राणन्दप्रणयनसमये नाट्यदर्पणविवरणरचनायाः सज्जता सम्भाव्यते । रघुवि-

लासस्य प्रस्तावनायां 'पञ्चप्रबन्धमिषपञ्चमुखानकेन' श्लोकानन्तरं द्रव्यालङ्कार–राघवाभ्युदय–यादवाभ्युदयाभिधानन्तरं नलविलासस्य नामोपात्तम् । नलविलासस्यामुखे च––

"संङ्ख्यायामिव काकुत्स्थ–यादवेन्द्रप्रबन्धयोः ।
वर्धमानैर्गुणैरङ्काः प्रथमानतिशेरते ॥"

इत्यभिधानात् नलविलासरचनायाः पूर्वं काकुत्स्थ–यादवेन्द्रप्रबन्धयोः ( राघवाभ्युदय–यादवाभ्युदययोः ) रचनाऽभिहिता भवति । किञ्च प्रबन्धशते नाट्यदर्पणदर्शितानां द्वादशानामपि रूपकाणां प्रत्येकमष्टौ पञ्च वा न्यूनाधिकाः कृतयो निर्मिताः सम्भवेयुः । तन्मध्ये यदि क्रमेण रूपकनिर्माणं कृतं स्यात्, तदाऽऽदिरूपकस्य नाटकस्य प्रथमं निर्माणं सम्भवेत् । अद्यावधि सूरिवर्यस्यास्यादिरूपकोदाहरणरूपं कृतिद्वयं ज्ञातम्, एकं सत्यहरिश्चन्द्रम्, द्वितीयं नलविलासमेतत् । तत्रापि नलविलासस्य प्राग् रचनाऽनुमीयते पूर्वोक्तेषु मुख्येषु पञ्चसु प्रबन्धेष्वस्य संस्मरणात् ।

रघुविलासस्य प्रस्तावनायामभिहिते प्रबन्धपञ्चके कविना यस्याभिधानं प्रागुपात्तम्, तस्य द्रव्यालङ्कारस्यादर्शपुस्तकमेकं ताडपत्रीयं वि. सं. १२०२ वर्षे लिखितमुपलभ्यते जेसलमेरजैनभाण्डागारे ( जेसलमेरभां. सूची पृ. ११० ) ।

वि. सं. ११४५ वर्षे जन्मभाजः, वि. सं. ११५० वर्षे संयतस्य, वि. सं. ११६६ वर्षे सूरिपदप्रतिष्ठितस्य, वि. सं. १२२९ वर्षे दिवंगतस्य सुप्रसिद्धस्य श्रीमतो हेमचन्द्राचार्यस्य पट्टधुरन्धरस्तत्समकालीनश्चायं महाकविरामचन्द्रो गूर्जरेश्वरसिद्धराज–कुमारपालयोः सत्तायां विद्यमान आसीद्, ययोः सत्तासमयो वि. सं. ११४९–९९–१२३० वर्षेषु विदितः । इत्यादिविचारणया नलविलासस्य विरचनं विक्रमीयद्वादशशताब्द्याः प्रान्तभागेऽथवा त्रयोदशशताब्द्याः प्रारम्भे प्रकल्प्यमानं नानुचितं प्रतिभाति । किञ्च वि. सं. १२४१ वर्षे विरचिते कुमारपालप्रतिबोधे वि. सं. १२९५ वर्षे विनिर्मिते गणधरसार्धशतकबृहद्वृत्तौ च नलविलासस्यावतरणमपि दृश्यते यत् पूर्वमत्र प्रदर्शितम् ।

१ 'रामचन्द्रकृतं प्रबन्धशतं द्वादशरूपकनाटकादिस्वरूपज्ञापकम् ।' —प्राचीनपत्रे

## कविरामचन्द्रस्य नेत्रनाशः ।

वि. सं. १३३४ वर्षे विरचिते प्रभावकचरिते प्रभाचन्द्रसूरिः सिद्धराज–रामचन्द्रयोः परिचयसूचनानन्तरं रामचन्द्रस्य दक्षिणदृष्टिविनाशविषयमित्थमुदलिखत्—

" इत्युक्त्वा विरते राज्ञि रामस्यादुष्यदेशकम् ( ? ) ।
नेत्रदृष्टिर्हि दुर्मृष्या सुकृतातिशयस्पृशाम् ॥
उपाश्रयाश्रितस्यास्य महापीडापुरःसरम् ।
व्यनशद् दक्षिणं चक्षुर्न रत्नमनुपद्रवम् ॥
कर्मप्रामाण्यमालोच्य ते शीतीभूतचेतसः ।
स्थितास्तत्र चतुर्मासीमासीनास्तपसि स्थिरे ॥ "

वि. सं. १३६१ वर्षे मेरुतुङ्गसूरिणा रचिते प्रबन्धचिन्तामणावेतद्विषयेऽयमुल्लेख उपलभ्यते—

" तदा श्रीसिद्धराजस्य सञ्जातदृष्टिदोषेण पं. रामचन्द्रस्य वसतौ प्रविशत एव लोचनमेकं स्फुटितम् । "

कविरामचन्द्रविहितेषु नैकेषु जैनस्तोत्रेषु दृष्टिदानप्रार्थनया तत् किञ्चिद् ध्वनितं व्यज्यते । तथाहि नेमिस्तवप्रान्ते—

" नेमे ! निधेहि निशितासिलताभिराम चन्द्रावदातमहसं मयि देव ! दृष्टिम् ।
सद्यस्तमांसि विततान्यपि यान्तु नाशमुज्जृम्भतां सपदि शाश्वतिकः प्रकाशः ॥ "

षोडशषोडशिकाप्रान्ते—

स्वामिन्ननन्तफलकल्पतरोऽतिराम चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुतांह्रिसरसीरुह ! दुःस्थसार्थे देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥

व्यतिरेकद्वात्रिंशिकाप्रान्ते तु—

जगति पूर्वविधेर्विनियोगजं विधिनतान्ध्य–गलत्तनुताऽऽदिकम् ।
सकलमेव विलुम्पति यः क्षणादभिनवः शिवसृष्टकरः सताम् ॥

इत्थङ्कारमकारणैकसुहृदं विश्वस्य पार्श्वं जिनं
तं स्तोतुस्त्रिजगद्विलक्षणगुणग्रामाभिरामाकृतिम् ।
यः कश्चिद् विकचीबभूव बत मे भाग्यातिरेकस्तत–
स्तल्लोकव्यतिरिक्तमुक्तियुवतिप्रेमप्रमोदोत्सवः ॥

इत्याद्युच्चारणेन स्पष्टं ध्वनितम् ।

## कविरामचन्द्रकृतं कुमारपालनृपस्य शोकशमनादि ।

वि. सं. १२२९ वर्षे रामचन्द्रगुरोर्हेमचन्द्राचार्यस्य स्वर्गमनमजनीति नैकग्रन्थेषु पठ्यते । तदनन्तरं तत्प्रतिबोधितपरमार्हतस्य तदनन्यभक्तस्य चौलुक्यकुमारपालभूपालस्य शोकशान्ती रामचन्द्रादिभिरकृतेति निम्नदर्शितात् वि. सं. १४२२ वर्षे निष्पन्नात् कृष्णर्षिगच्छीयजयसिंहसूरिरचितकुमारपालचरितान्तर्गतोल्लेखाद् विज्ञायते—

"हेमाचार्यवियोगेन शून्यात्मेव समन्ततः ।
विदाञ्चकार चौलुक्यो न किञ्चित् कृत्यमात्मनः ॥
ततः स रामचन्द्राद्यैर्बुधैः सम्बोध्य नित्यशः ।
दिनैः कतिपयैश्चक्रे स्तोकशोकः कथञ्चन ॥"

वि. सं. १२३० वर्षे हेमाचार्यस्वर्गमनानन्तरं षट्सु मासेषु व्यतीतेषु निजभ्रातृव्याजयपालार्पितविषसङ्क्रमे कुमारपालभूपालः पर्यन्ताराधनां रामचन्द्रसूरिमाकार्याकार्षीदित्यपि तत एव कुमारपालचरिताद्—

"अथ राजर्षिराकार्य रामचन्द्रं मुनीश्वरम् ।
पर्यन्ताराधनां कर्तुं विधिनैवं प्रचक्रमे ॥" इत्यादिनाऽवसीयते ।

---

## कविरामचन्द्रस्य मृत्युः ।

कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यपट्टधुरन्धरस्य गूर्जरेश्वरश्रीसिद्धराज—कुमारपालपृथ्वीपालादिसम्मानितस्य प्रबन्धशतकर्तुस्त्रैविद्यवेदिनः कविकटारमल्लोपपदधारिणः स्वतन्त्रमहाकवेरीदृशस्य विद्वद्रत्नस्य श्रीमतो रामचन्द्रसूरेर्मरणं श्रुतमप्यतिकम्पजनकममानुषोचितनीत्याऽजयपालकुनृपकदर्थनयाऽजनीति निम्नावतारितचरितग्रन्थोल्लेखादवगम्यते ।

मेरुतुङ्गसूरिः प्रबन्धचिन्तामण्यन्तर्गतरामचन्द्रप्रबन्धे ईदृग् ज्ञापयति स्म—

"अथ श्रीप्रबन्धशतकर्ता रामचन्द्रस्तु तेन भूपापसदेन तप्तताम्रपट्टिकायां निवेश्यमानः

'महिवीढह सचराचरह जिण सिरि दिण्हा पाय ।
तसु अत्थमणु दिणेसरह होउत होइ चिराय ॥'

इत्युदीर्य दशनाग्रेण रसनां छिन्दन् विपन्न एव व्यापादयाञ्चक्रे ।"

कविरत्नरामचन्द्रर्षिहत्याऽऽद्यधर्मविधायकस्याजयपालस्य मरणविषयमेवमुल्लिखति स्म स एव प्रबन्धचिन्तामणिकारः—

१ "श्रीविक्रमनृपाद् द्वि–द्वि–मन्वब्देऽयमजायत । ग्रन्थः ससप्तत्रिशती षट् सहस्राण्यनुष्टुभाम् ॥"

२ महीपीठस्य सचराचरस्य येन शिरसि दत्ताः पादाः ।
तस्यास्तमनं दिनेश्वरस्य भवितव्यं भवति चिराय ॥

" त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
अत्युग्रपुण्य–पापानामिहैव फलमश्नुते ॥'

इति प्रमाणोक्तप्रामाण्यात् स कुपतिर्वयजलदेवनाम्ना प्रतीहारेण क्षुरिकया हतो धर्मस्थानपातकी कृमिभिर्भक्ष्यमाणः प्रत्यहं नरकमनुभूय परोक्षतां प्रपेदे । सं. १२३० पूर्ववर्षाद**जयदेवेन** वर्ष ३ राज्यं कृतम् ॥ "

वि. सं. १४०५ वर्षे विरचिते प्रबन्धकोषे राजशेखरसूरिरेवं निर्दिशति स्म—" एवं व्रजति काले राजा **कुमारपाल**देवः श्री**हेम**श्च वृद्धौ जातौ । श्रीहेमसूरिगच्छे विरोधः । **रामचन्द्र–गुणचन्द्रा**दिवृन्दमेकतः, एकतो बालचन्द्रः । तस्य च बालचन्द्रस्य राजभ्रातृव्येनाजयपालेन सह मैत्री । एकदा प्रस्तावे राज्ञो गुरूणा**माभड**स्य च रात्रौ मन्त्रारम्भः । राजा पृच्छति–भगवन् ! अहमपुत्रः कं स्वपदे रोपयामि ? गुरवो ब्रुवन्ति–प्रतापमल्लं दौहित्रं राजानं कुरु धर्मस्थैर्याय, अजयपालात् तु त्वत्स्थापितधर्मक्षयो भावी । अत्रान्तरे आभडः प्राह–भगवन् ! यादृशस्तादृश आत्मीयो भव्यः । पुनः श्री**हेमः**—अजयपालं राजं मा कृथाः सर्वथैव । एवं मन्त्रं कृत्वोत्थितास्त्रयः । स मन्त्रो बालचन्द्रेण श्रुतः, अजयपालाय च कथितः; अतो **हेम**गच्छीय**रामचन्द्रा**दिषु द्वेषः, आभडे तु प्रीतिः । **हेमसूरेः** स्वर्गमनं जातम्, ततो दिनद्वात्रिंशता राजा **कुमारपालोऽजयपाल**दत्तविषेण परलोकमगमत् । अजयपालो राज्ये निषण्णः । श्री**हेम**द्वेषाद् **रामचन्द्रा**दिशिष्याणां तप्तलोहविष्टरासनयातनया मारणं कृतम् । राजविहाराणां बहूनां पातनम् । लघुक्षुल्लकानाहूय प्रातः प्रातर्मृगयां कर्तुमभ्यासयति, पूर्वमेते चैत्यपरिपाटीमकार्षुरित्युपहासात् । बालचन्द्रोऽपि स्वगोत्रहत्याकारापक इति ब्रुवद्भिर्ब्राह्मणैर्मनस उत्तारितः, लज्जितो मालवान् गत्वा मृतः । पापं पच्यते हि सद्यः । "

वि. सं. १४९२ वर्षे विरचिते कुमारपालप्रबन्धे जिनमण्डनगणिरपि रामचन्द्रादिष्वजयपालस्य द्वेषहेतुमित्थं सूचयति स्म—

" अथैवं काले कवलितानेकपुरुषरत्ने श्री**कुमारपाल**भूपालः श्रीहेमसूरिश्च कृतकृत्यौ महसा तपसा वयसा च वृद्धौ जातौ । परं **हेम**सूरिगच्छे विरोधः । **रामचन्द्र–गुण**चन्द्रवृन्दमेकतः, एकतो **बाल**चन्द्रः; तस्य च राजभ्रातृव्याजयपालेन सह मैत्री ।

---

१ शर–गगन–मनुमिताब्दे ज्येष्ठामूलीयधवलसप्तम्याम् । निष्पन्नमिदं शास्त्रं श्रोत्रध्येत्रोः सुखं तन्यात् ॥

२ प्रबन्धो योजितः श्रीमत्**कुमार**नृपतेरयम् । गद्य-पद्यैर्नवैः कैश्चित् कैश्चित् प्राक्तननिर्मितैः ॥
श्री**सोमसुन्दर**गुरोः शिष्येण यथाश्रुतानुसारेण । श्री**जिनमण्डन**गणिना द्व्यङ्क–मनुप्रमितवत्सरे रुचिरः ॥

अथ वार्धक्यमालोक्य चौलुक्यपृथिवीपतिः ।
स्थित्वाऽनु रहंसं ( स्थित्वैकदा रहो ) रात्रौ गुरुं प्रत्येवमूचिवान् ॥ १ ॥

सत्यपि त्वादृशे सर्वविद्याम्भोधौ गुरौ मम ।
फलं गार्हस्थ्यधर्म( वृक्ष )स्य नाभाग्यैस्तनयोऽजनि ॥ २ ॥

दिने दिने जरा चैषा जनयन्ती कृशाङ्गताम् ।
ओजायते मम राज्यलक्ष्मीदानार्हचिन्तया ॥ ३ ॥

[ राज्यसूत्रमतः किञ्चिदासूत्र्य भगवन्नहम् ।
हंसायितुमभीप्सामि समतारसवारिधौ ॥ ४ ॥ ]

ददाम्यजयपालाय स्वराज्यं भ्रातृसूनवे ।
उत प्रतापमल्लाय दौहित्राय निवेद्यताम् ॥ ५ ॥ *

ततो विमृश्य सूरिभिरभाणि—राजन् ! भ्रातृव्यो न योग्यो दुराशयत्वात्, सत्सङ्गरहितत्वादधर्मनिष्ठत्वादिकारणैर्न बहुराजवर्गीय—प्रजासम्मतः, भ्रातृव्यात् तु त्वत्कारितधर्मस्थानक्षयः कियानस्ति । प्रतापमल्लः प्रजाप्रिय—न्याय—धर्मनिष्ठत्वादिगुणैर्योग्यः । यदुक्तम्—

' धर्मशीलः सदा न्यायी पात्रे त्यागी गुणादरः ।
प्रजानुरागसम्पन्नो राजा राज्यं करोति सः ॥ '

एवं मन्त्रे कृते बालचन्द्रेण स्वरूपमेतदजयपालाय न्यवेदि । तस्य च तदनु रामचन्द्रादिषु श्रीचौलुक्ये च महान् द्वेषः ॥ "

अजयपालाधिपत्ये मोहराजपराजयनाटकादिनिर्माता जैनमन्त्रियशःपालो राजसचिवपदे नियुक्तो विज्ञायते । एवमन्येऽपि जैना अधिकारिणो राजमान्याश्च धनाढ्याः श्रेष्ठिन आभडादयस्तदा सम्भवेयुः । तथाप्येतादृश्या अतीवनिन्द्यान्याय्यप्रवृत्तितस्तं सत्ताऽधीशं निवारयितुं निष्फलप्रयत्ना भवेयुरित्यतीव शोचनीयं विषादजनकमतिदुःखकरं दुर्दैवदुश्चेष्टितम्, येनेदृग्विधस्य विद्वद्रत्नस्येत्थमपमरणप्रसङ्गः ! ! !

* इमे पञ्च श्लोकाः प्रबन्धकारेण जयसिंहसूरिरचितात् कुमारपालचरिताद् (स. ७, श्लो० १०६) उद्धृता ज्ञायन्ते।

१ सूत्रधारः—" आर्ये ! अस्त्येव श्रीमोढवंशावतंसेन श्रीअजयदेवचक्रवर्तिचरणराजीवराजहंसेन मन्त्रि-धनदेवतनुजन्मना रुक्मिणीकुक्षिलालितेन सर्वतोमुखनिस्तुषशेमुषीविलासवासभवनेन निर्व्याजराजनीतिनितम्बिनीवदनविभ्रममणिदर्पणेन व्यापारिकमलाकुचकलशमुक्ताफलहारयष्टिना सारसारस्वतोदारसारणीसेकसुकुमारस्मेरकाव्यकन्दलप्ररोहेण परमार्हतेन यशःपालकविना विनिर्मितं मोहराजपराजयो नाम नाटकम् ॥ "

——मोहराजपराजयनाटके ( गा. ओ. सिरीझ् संस्थया प्रकाशिते पृ. २ )

## उपसंहारः ।

नलविलासं तत्कर्तारं कविरत्नं रामचन्द्रं चाधिकृत्य यथामति यथाशक्ति यथाज्ञातं यथासाधनं यथोपयुक्तं न्यवेदि । नलविलाससंशोधनकर्मणि आदर्शपुस्तकत्रयमस्माभिरुपलब्धम् । तत्रैकं तावत् प्रतिकृति( प्रेसकॉपी )सदृशं १४३ पत्रं सं. १४८४ वर्षे लिखितादर्शान्नूतनं लेखितं प्रायः शुद्धं **क**संज्ञितम्, द्वितीयं ९२ पत्रात्मकं नूतनं क्वचिदशुद्धं **ख**संज्ञितम्; द्वयमप्येतदत्रत्य-संस्कृतपुस्तकालयसङ्ग्रहसत्कम् । तृतीयं १९ पत्रपरिपूर्णं प्रायः शुद्धं खसंज्ञकेन समं **ग**संज्ञितं **छाणीजैनज्ञानमन्दिर**सत्कं प्रवर्तकश्री**कान्तिविजय**जैनमुनिराजस्य कृपया द्वितीयाङ्कमुद्रणसमये सम्प्राप्तम् ।

तथा च नाट्यदर्पणस्य सविवरणस्यादर्शपुस्तकम् **आग्रास्थश्रीविजयधर्म-लक्ष्मीज्ञानमन्दिरतः** समधिगतम् । वसुदेवहिण्डी–गणधरसार्धशतकबृहद्वृत्त्यादर्शपुस्तके पंन्यासपदाङ्कित**सम्पद्विजय-**मुनिराजस्य कृपयाऽत्रत्य**जैनज्ञानमन्दिरा**न्तर्गतात् श्री**हंसविजय**मुनिराजीयशास्त्रसङ्ग्रहादधिगते । रामचन्द्रसूरिरचितस्तोत्रप्रतिस्त्वत्रत्य '**झवेरी अंबालाल नानाभाई**' संज्ञकश्रेष्ठिसङ्ग्रहादधिगता । यतोऽत्र महत्त्वं सौरभं च प्रसृतमतः कृतज्ञतासंसूचकमेतेषामुपकृतं संस्मरामः ।

पूर्वोक्तपुस्तकसाहाय्येन सावधानतया संशोधिते, पाठान्तरादिभिः परिष्कृते, प्राकृतपाठानां संस्कृतच्छायया संस्कृते, प्रस्तावना–पद्यसूचिप्रभृतिभिर्यथौचित्यमुत्तेजितेऽस्मिन् मतिमान्द्यतया प्रमादेन दृष्टिदोषेण वा स्थिता जाता वा स्खलनाः सुमनसः सम्मार्जयिष्यन्तीत्याशास्ते—

श्रीमत्सयाजीरावमहाराजस्य शतार्धवर्षीयसौराज्य-<br>सुवर्णमहोत्सवस्य सुवर्णप्रभाते, **वटपद्रे**<br>ता. ११–१–२६

गान्धीत्युपाह्वो भगवान्दासतनयः<br>**लालचन्द्रः**



॥ श्रीः ॥

श्रीरामचन्द्रसूरिविरचितं

# नलविलासम् ।



वैदर्भी रीतिमहं लभेय सौभाग्यसुरभितावयवाम् ।
दमयन्ती वैरस्यं दिशति गिरां या परां लक्ष्मीम् ॥ १ ॥

( नान्द्यन्ते )

**सूत्रधारः**—( सप्रमोदम् )

कविः काव्ये रामः सरसवचसामेकवसति-
नलस्येदं हृद्यं किमपि चरितं धीरललितम् ।
समादिष्टो नाट्ये निखिलनटमुद्रापटुरहं
प्रसन्नः सभ्यानां कटरि ! भगवानेष स विधिः ॥ २ ॥

तद् गृहं गत्वा रङ्गोपजीविनः प्रगुणयामि ( इति परिक्रामति । पुरोऽवलोक्य ) कथमयमित एवाभिपतति वयस्यो मन्दारः !

( प्रविश्य )

**नटः**—भाव ! दत्तः कोऽपि सामाजिकैरभिनयादेशः ?

**सूत्रधारः**—दत्तः श्रीमदाचार्यहेमचन्द्रस्य शिष्येण रामचन्द्रेण विरचितं नलविलासाभिधानमाद्यं रूपकमभिनेतुमादेशः ।

**नटः**—भाव ! एतस्यां रामचन्द्रकृतौ सम्भाव्यते कोऽपि सामाजिकानां रसास्वादः ?

**सूत्रधारः**—मारिष ! सम्भाव्यत इति किमुच्यते ? यतः—

प्रबन्धानाधातुं नवभणितिवैदग्ध्यमधुरान्
कवीन्द्रा निस्तन्द्राः कति नहि मुरारिप्रभृतयः ।
ऋते रामान्नान्यः किमुत परकोटौ घटयितुं
रसान् नाट्यप्राणान् पटुरिति वितर्को मनसि नः ॥ ३ ॥

अपरं च—

प्रबन्धा इक्षुवत् प्रायो हीयमानरसाः क्रमात् ।
कृतिस्तु रामचन्द्रस्य सर्वा स्वादुः पुरः पुरः ॥ ४ ॥

नटः—भाव ! अयमर्थः सत्य एव । यतः—

सङ्ख्यायामिव काकुत्स्थ-यादवेन्द्रप्रबन्धयोः ।
वर्धमानैर्गुणैरङ्काः प्रथमानतिशेरते ॥ ५ ॥

किन्तु रघु-यदुचरितं निसर्गतोऽपि रमणीयम्, अतस्तत्र सुकरो रसनिवेशः । नलचरितं तु न तथा, ततः साशङ्कोऽस्मि ।

सूत्रधारः—मारिष ! मा शङ्किष्ठाः

श्रुतीनां पीयूषं कविकुलगिरां कीर्तिपटहो
रसापीतेः पात्रं रघु–यदुचरित्रं विजयते ।
परं किञ्चित् किञ्चिन्नलललितमप्येतदमृत-
स्रवन्तीं श्रोतॄणां श्रवसि विनिधातुं प्रभवति ॥ ६ ॥

नटः—( विमृश्य ) भाव ! अयं कविः स्वयमुत्पादक उताहो परोपजीवकः ?

सूत्रधारः—अत्रार्थे तेनैव कविना दत्तमुत्तरम्—

जनः प्रज्ञाप्राप्तं पदमथ पदार्थं घटयतः
पराध्वाध्वन्यान् नः कथयतु गिरां वर्त्तनिरियम् ।
अमावास्यायामप्यविकलविकासीनि कुमुदा-
न्ययं लोकश्चन्द्रव्यतिकरविकासीनि वदति ॥ ७ ॥

अपि च शपथप्रत्येयपदपदार्थसम्बन्धेषु प्रीतिमादधानं जनमवलोक्य जातखेदेन तेनेदं चाभिहितम्—

स्पृहां लोकः काव्ये वहति जरठैः कुण्ठिततमै-
र्वचोभिर्वाच्येन प्रकृतिकुटिलेन स्थपुटिते ।
वयं वीथीं गाढुं कथमपि न शक्ताः पुनरिमा-
मियं चिन्ता चेतस्तरलयति नित्यं किमपि नः ॥ ८ ॥

नटः—( क्षणं विमृश्य ) भाव ! अद्य नटी विषादिनी ।

सूत्रधारः—जानासि किमपि विषादस्य कारणम् ?

नटः—जानामि। या भवत्पुत्री कुन्तला नाम सा भर्त्रा स्वगृहान्निर्वासिता।

सूत्रधारः—हुं! कुन्तला भर्त्रा गृहान्निर्वासिता?

नटः—अथ किम्।

सूत्रधारः—(विमृश्य) अवद्यं किमप्युद्भाव्य उताहो मुधैव?

नटः—मुधैव।

सूत्रधारः—अनवसरस्तर्हि विषादस्य। किञ्च कृतेनापि विषादेन सा गृहप्रवेशं न लभते। यतः—

न स मन्त्रो न सा बुद्धिर्न स दोष्णां पराक्रमः।
अपुण्योपस्थितं येन व्यसनं प्रतिरुध्यते॥ ९॥

यदि च सा निरवद्या, तदा तां पुनरपि पतिः सम्भावयिष्यति।

नटः—पुराप्ययमर्थो जातो[1]ऽस्ति। किन्तु परमं गृहाधिपत्यमवाप्य साम्प्रतं सा कर्मकरवृत्त्या तिष्ठतीति नटी विषादमुद्वहति।

सूत्रधारः—(साक्षेपम्) मारिष! त्वमप्येवमभिदधासि! ननु—

अकृताखण्डधर्माणां पूर्वे जन्मनि जन्मिनाम्।
सापदः परिपच्यन्ते गरीयस्योऽपि सम्पदः॥ १०॥

(नेपथ्ये)

वयस्य कलहंस! परमेश्वरस्य युगादिदेवस्य सपर्यया वयमतीव श्रान्ताः। तदादेशय खरमुखम्। येनास्मद्विश्रामहेतुं सच्छायं कमप्युद्यानप्रदेशमवलोकयति।

सूत्रधारः—(समाकर्ण्य) कथं नलनेपथ्यधारी नटो वदति? तदेहि मारिष! वयमप्यनन्तरकरणीयाय सज्जीभवाम।

(इति निष्क्रान्तौ)

आमुखम्।

---

(ततः प्रविशति राजा कलहंसादिकश्च परिवारः)

राजा—(वयस्य कलहंस इत्यादि पुनः पठति)

कलहंसः—हंहो! खरमुख! गवेषय कमपि देवस्य विश्रामहेतुमारामप्रदेशम्।

---

१ ख ज्ञातो०।

( प्रविश्य )

**विदूषकः**—( १ ) भो कलहंस ! अणेगकरालवालविहुरे आरामकुहरे एयंमि एगागी भयामि, ता न गवेसइस्सं ।

**राजा**—( स्मित्वा ) वयस्य ! महावीरः खल्वसि, ततस्त्वमेव( वं ) बिभेषि ।

**विदूषकः**—( २ ) साहु पियवयस्सेण सुमराविदम्हि । मए जाणिदं अहं भोयणलंपडो बंभणो न गवेसइस्सं ( इति परिक्रामति )

**राजा**—( समन्तादवलोक्य कलहंसं प्रति ) कटरि ! आराममण्डनानां तरुखण्डानां नेत्रपात्रैकलेह्यः कोऽपि चारिमा । तथाहि—

आपाकपिञ्जरफलोत्करपिङ्गभासो
भास्वत्करप्रसररोधिगुलुञ्छभाजः ।
कूजत्पिकीकुलकुलायकलापवन्तः
प्रीणन्ति पश्य पथिकान् सहकारवृक्षाः ॥ ११ ॥

**विदूषकः**—( ३ ) एदं उज्जाणकेलिसरसीसीकरासारसिणिद्धच्छायं तरुखंडं, ता इत्थ एदु पिअवयस्सो ।

**राजा**—( विलोक्य स्वगतम् ) समुचितोऽयं प्रदेशः । पवित्रसरसप्रदेशप्रकाशनीयः खलु शुभोदर्कः स्वप्नः । ( प्रकाशम्, अपवार्य कलहंसं प्रति ) किमद्यापि चिरयति नैमित्तिकः ?

**कलहंसः**—एष इदानीमायाति ।

**राजा**—( समन्ततो विलोक्य )

दात्यूहकुक्कुभकपिञ्जलचक्रवाक-
सारङ्गभृङ्गकलकूजितमञ्जुकुञ्जाः ।
उद्यानकेलिसरसीनवफुल्लमल्ली-
वल्लीगृहाङ्गणभुवो रमयन्ति चेतः ॥ १२ ॥

---

( १ ) भो कलहंस ! अनेककरालव्यालविधुरे आरामकुहरे एतस्मिन् एकाकी बिभेमि, तन्न गवेषयिष्यामि ।

( २ ) साधु प्रियवयस्येन स्मारितोऽस्मि । मया ज्ञातम्, अहं भोजनलम्पटो ब्राह्मणो न गवेषयिष्यामि ।

( ३ ) एतदुद्यानकेलिसरसीसीकरासारस्निग्धच्छायं तरुखण्डम्, तदत्रैतु प्रियवयस्यः ।

( प्रविश्य )

प्रतीहारः—देव ! निषधाधिपते ! एको ब्राह्मणो द्वारि वर्तते ।

राजा—( स्वगतम् ) नैमित्तिकः खल्वयम् । ( प्रकाशम् ) वयस्य ! क्षणमेकमिदानीं मङ्गलाभिधायिना भवता भाव्यम् ।

विदूषकः—(सरोषम्) ( १ )किं अहं तए सव्वदा अमंगलभासगो जाणिदो ? ता न इत्थ चिट्ठीस्सं । ( इति गन्तुमिच्छति )

राजा—वयस्य ! न गन्तव्यम् ।

विदूषकः—( २ ) न तुह सयासे वि चिट्ठिस्सं, किंतु गरुअनिअबंभणीए चलणाण सेविस्सं । ( इति गन्तुमिच्छति )

कलहंसः—खरमुख ! यदादिशति देवस्तत् क्रियताम् ।

( विदूषको निःश्वस्य यथास्थानमुपविशति )

राजा—( स्वगतम् ) यथाऽयमकाण्डे कुपितः प्रसन्नश्च, तथा ज्ञायते प्रत्यूहगर्भः स्वप्नार्थः । तथापि यन्नैमित्तिको व्याख्यास्यति तत् प्रमाणम् । ( प्रकाशम् ) प्रियङ्कर ! शीघ्रं प्रवेशय ।

प्रतीहारी—यदादिशति देवः ( इत्यभिधाय निष्क्रान्तः )

( प्रविश्य )

नैमित्तिकः—स्वस्ति महाराजाय ।

राजा—इदमासनमास्यताम् । ( नैमित्तिक उपविशति ) अद्यास्माभिस्त्रियामातुर्ययामचतुर्भागे स्वप्नो दृष्टः । यथा कुतोऽप्यागत्यास्मत्करतलमारूढा प्रथममेका मुक्तावली, पुनः प्रभ्रष्टा, पुनरप्यस्माभिरादाय कण्ठे निवेशिता । ततो वयं तया प्रकामं कान्तिमन्तः सञ्जाताः ।

नैमित्तिकः—( विमृश्य ) देव ! प्रशस्ततमोऽयं स्वप्नः । स्त्रीरत्नलाभेन महता प्रतापेन च फलिष्यति । किन्तु प्रत्यूह—( इत्यर्धोक्ते सभयम् )

राजा—दैवज्ञ ! मा भैषीर्यथाज्ञातमावेदय ।

नैमित्तिकः—किन्तु प्रत्यूहगर्भः ।

( १ ) किमहं त्वया सर्वदाऽमङ्गलभाषको ज्ञातः ? । ततो नात्र स्थास्यामि ।

( २ ) न तव सकाशेऽपि स्थास्यामि, किन्तु निजगुरुब्राह्मण्याश्चरणौ सेविष्ये ।

विदूषकः—( दण्डमुद्यम्य ) ( १ ) अरे दासीए पुत्ता ! नेमित्तिआ ! खरमुहे वि सन्निहिदे पियवयस्सस्स पच्चूहो ?

राजा—अस्तु प्रत्यूहगर्भः, पर्यन्ते चेच्छुभोदर्कः ।

नैमित्तिकः—कः सन्देहः ?

राजा—दैवज्ञ ! स्वप्नार्थपरिज्ञानप्रत्ययहेतुं कमप्यचिरभाविनमर्थमावेदय ।

नैमित्तिकः—परमप्रीतिहेतुरचिरादेव देवस्य कोऽप्यर्थः सम्पत्स्यते ।

राजा—( विमृश्य ) कोऽत्र भोः ?

( प्रविश्य )

पुरुषः—एषोऽस्मि । आज्ञापयतु देवः ।

राजा—अये सिंहलक ! दर्शय मत्प्रसादस्य फलं नैमित्तिकाय ।

सिंहलकः—यदादिशति देवः । ( इत्यभिधाय सनैमित्तिको निष्क्रान्तः )

( नेपथ्ये )

कोऽत्र भोः ? निवेद्यतां निषधाधिपतयेऽस्मदागमनम् ।

राजा—( समाकर्ण्य ) वयस्य ! विलोकय गत्वा कोऽयम् ।

विदूषकः—( २ ) जं आणवेदि भवं

( इत्यभिधाय निष्क्रम्य, ससम्भ्रमं प्रविश्य )

भो लहुं उत्थेहि उत्थेहि, जेण पलायम्ह ।

राजा—विश्रब्धमभिधीयतां किं भयस्य कारणम् ।

विदूषकः—( ३ ) एगो पिसाओ दुवारे चिट्ठदि ।

राजा—असम्भावनीयोऽयमर्थः । कुतो नामात्र भगवद्युगादिदेवतायतनपावने वने पिशाचानां सम्भवः ?

विदूषकः—( सरोषम् ) ( ४ ) युगादिदेवावट्ठंभेण तुज्झे इह ज्जेव चिट्ठध ।

( १ ) अरे दास्याः पुत्र ! नैमित्तिक ! खरमुखेऽपि सन्निहिते प्रियवयस्यस्य प्रत्यूहः ?

( २ ) यदाज्ञापयति भवान् । भो ! लघूत्तिष्ठोत्तिष्ठ, येन पलायामहे ।

( ३ ) एकः पिशाचो द्वारे तिष्ठति ।

( ४ ) युगादिदेवावष्टम्भेन यूयमिहैव तिष्ठत ।

राजा--वयस्य ! क्षणं मर्षय यावत् सम्यग् निर्णयामि।

विदूषकः—(१) भो ! ता न निस्सरिस्सं । नियबंभणीचलणसमरणेण नट्ठं मह भयं।

कलहंसः—( विहस्य ) अतीव ब्राह्मणीभक्तोऽयम् ।

राजा--कलहंस ! स्थितिरियं जगतः ।

आत्मन्यपत्ये ( त्य-) दारेषु प्राणेषु विभवेषु च ।
इतो नृप इतो रङ्कस्तुल्या प्रीतिर्द्वयोरपि ॥ १३ ॥

तत उत्थाय स्वयं विलोकय कोऽयं द्वारि ।

( कलहंसो निष्क्रम्य पुनः प्रविशति )

विदूषकः-- ( २ ) भो रायं ! अहं तुह पिट्ठिभाए चिट्ठिस्सं। बीहामि एआओ बंभरक्खसाओ ।

राजा—( विलोक्य ) कथं खट्वाङ्गसङ्गी कापालिकः ? स्वागतं तपोधनाय।

कलहंसः—मुने ! इदमासनमास्यताम् ।

कापालिकः—( स्वगतम् ) अयमपि तावद् द्रष्टव्यः । कदाचिदेतदीयमपि चरितं कलचुरिपतिः पृच्छति । ( प्रकाशम् ) स्वस्ति महाराजाय ।

राजा---कुतस्तपोधनः?

कापालिकः—साम्प्रतं विदर्भमण्डलात् ।

राजा—कियदवधिगमनम् ?

कापालिकः---जीवितावधि ।

राजा—( स्वगतम् ) वचनशठस्तापसच्छद्मा चर इव लक्ष्यते। ( प्रकाशम् ) देशावधिं पृच्छामि ।

कापालिकः---नवनवतीर्थदर्शनश्रद्धालूनां तपस्विनां कुत एव देशावधिः ।

राजा --( स्वगतम् ) नियतमयं चरः। अनुचितमाचरितमस्माभिर्यदस्मिन्ननावृते वने समीपीकृतः। कदाचिदयं घातकोऽपि स्यात्। भवतु तावत्। ( प्रकाशम् ) कुतो भवति दीक्षासङ्क्रमः ?

( १ ) भोः ! तन्न निःसरिष्यामि, निजब्राह्मणीचरणस्मरणेन नष्टं मम भयम् ।

( २ ) भो राजन् ! अहं तव पृष्ठभागे स्थास्यामि, बिभेमि एतस्माद् ब्रह्मराक्षसात्।

कापालिकः—रामगिरिनिवासिनः कापालिकचूडामणेश्चन्द्रशेखरात् ।

विदूषकः—( १ ) दिट्ठिया महं सालो समागदो । सो खलु चंदसेहरो मह बंभणीए पिआ ।

कलहंसः—( विहस्य ) मुने ! महोपाध्यायोऽसौ निषधायां, तदमुना भगिनीपतिना भवद्भिर्न लज्जितव्यम् ।

कापालिकः—( सरोषम् ) सम्पदापि निवेदितमस्य महोपाध्यायत्वम् ।

राजा—( स्मित्वा ) अल्पसम्पत्तिकत्वमहेतुरमहोपाध्यायत्वे । अल्पवेतना हि विद्याजीविनः प्रायेण ।

देवीं वाचमविक्रेयां विक्रीणीते धनेन यः ।
क्रुद्धेव तस्मै सा मूल्यमत्यल्पमुपढौकयेत् ॥ १४ ॥

कापालिकः—( सोपहासम् ) किमभिधानोऽयं महोपाध्यायः ?

राजा—खरमुखाभिधानोऽयम् ।

कापालिकः—( सोपहासम् ) आकारानुरूपमभिधानम् ।

राजा—मुने ! किमभिधानमलङ्करोषि ? ।

कापालिकः—लम्बोदराभिधानोऽस्मि ।

विदूषकः—( २ ) आगिदीए सरिसं नामं ।

राजा—( सस्मितम् ) वयस्य ! सर्वस्याभ्यागतो गुरुरिति नैनं हसितुमर्हसि ।

विदूषकः—( ३ ) समाणे वि बंभचारित्तणे किं मे एस हसदि, अहं कीस न हसिस्सं ?

राजा—अप्रयोजकः सामान्योपन्यासः परिहासस्य ।

समेऽपि देहदेशत्वे तूलमप्यक्षि पीडयेत् ।
पाषाणघर्षणेनापि पादाः कान्तिमुपासते ॥ १५ ॥

विदूषकः—( ४ ) भो कावालिया[1] ! जइ मे पत्थणं विहलं न करेसि, ता किं पि पत्थेमि ।

( १ ) दिष्ट्या मम श्यालः समागतः । स खलु चन्द्रशेखरो मम ब्राह्मण्याः पिता ।
( २ ) आकृत्याः सदृशं नाम ।
( ३ ) समानेऽपि ब्रह्मचारित्वे किं मामेष हसति ? अहं कथं न हसिष्यामि ?
( ४ ) भोः कापालिक ! यदि मे प्रार्थनां विफलां न करोषि, तदा किमपि प्रार्थये ।

१ क. जय ।

**कापालिकः**—यथेच्छं विज्ञपय ।

**विदूषकः**—( १ ) जइ मे इमं खट्टंगं समप्पेसि, ता तुह बहिणीए खंडणोवग-रणं मुसलं भोदि ।

**कापालिकः**—( सरोषम् ) आः पाप ! ब्राह्मणब्रुव ! मामासादितपरमब्रह्माणं तपोधनमवजानासि ? एषं ते खट्वाङ्गेन शिरः पातयामि ।

**विदूषकः**—( सरोषमुत्थाय ) ( २ ) अरे दासीपुत्त ! कावालिया ! लहु इदो एहि, जेण दे एदिणा जण्णोपवित्तेण मत्थयं तोडेमि ।

( उभौ नियुध्येते )

**राजा**—अलमलमनुचिताचरणेन । कलहंस ! निवारय निवारय ।

**कलहंसः**—( परिक्रम्य ) किमिदं युध्यमानस्य कापालिनः कक्षातः पतितम् ?

**राजा**—( विलोक्य ) कलहंस ! किमिदम् ?

**कलहंसः**—देव ! अनेकवस्त्रग्रन्थिनिबद्धा मात्रेयं कापालिनः सम्भाव्यते ।

**राजा**—मध्यमवलोकय । ( कलहंसः तथा करोति )

**कापालिकः**—( विलोक्य सभयमात्मगतम् ) हा ! हतोऽस्मि । ( युद्धाद् विरम्य प्रकाशमुच्चैःस्वरम् ) भो भो ! नालोकनीयं मन्मन्त्रपुस्तकम् ।

**कलहंसः**—( विलोक्य ) कथं वस्त्रान्तरे लेखः ?

**राजा**—( गृहीत्वा वाचयति ) स्वस्ति । महाराजचित्रसेनं मेषमुखः प्रणम्य विज्ञपयति यथा सर्वमपि युष्मन्मनोरथानुरूपं सम्भाव्यते । इयं च कोष्ठकहस्तात् तत्प्रतिकृतिर्ग्राह्येति ।

**कलहंसः**—कोऽयं चित्रसेनः ? को मेषमुखः ? कः कोष्ठकः ? का वा सा ? यस्याः प्रतिकृतिः ।

**राजा**—अव्यक्तस्थानश्चारलेखोऽयं न शक्यते ज्ञातुम् । भवतु तावत्, पुरोऽवलोकय ।

( १ ) यदि मे इदं खट्वाङ्गं समर्पयसि, तदा तव भगिन्याः खण्डनोपकरणं मुशलं भवति ।

( २ ) अरे दासीपुत्र ! कापालिक ! लघु इत एहि, येन त एतेन यज्ञोपवीतेन मस्तकं त्रोटयामि ।

---

१ क. यथेष्टं । २ क. जय । ३ ख. कपा० ।

( कलहंसः तथा करोति )

**कापालिकः**—( सभयमुच्चैःस्वरम् ) तदेव व्याहरति ।

**कलहंसः**—( विलोक्य सहर्षमात्मगतम् ) अहो ! स्त्रीरत्नं सेयं स्वप्नदृष्टा मुक्तावली । स चैव नैमित्तिकावेदितः स्वप्नार्थज्ञानप्रत्ययहेतुरर्थः । ( प्रकाशम् ) देव ! सफलीक्रियतां नेत्रनिर्माणं लोकोत्तरवस्तुदर्शनेन ।

**राजा**—( विलोक्य सहर्षप्रकर्षम् ) अहो ! बहूनां वस्तूनामेकत्र वासः ।

वक्त्रं चन्द्रो नयनयुगली पाटलाम्भोजयुग्मं
नासानालं दशनवसनं फुल्लबन्धूकपुष्पम् ।
कण्ठः कम्बुः कुचयुगमथो हेमकुम्भौ नितम्बौ
गङ्गारोधश्चरणयुगलं वारिजद्वन्द्वमेतत् ॥ १६ ॥

किञ्च—

लावण्यपुण्यतनुयष्टिमिमां मृगाक्षीं
जाने स्वयं घटितवान् भगवान् विधाता ।
स्वर्योषितामपि चिरस्पृहणीयमङ्ग-
विन्यासासौरभमिदं कथमन्यथाऽस्याः ॥ १७ ॥

( पुनर्विमृश्य ) मुने ! किमिदम् ?

**कापालिकः**—( सरोषमिव ) यथेदं मौक्तिकप्रायमाभरणं, यथा दन्तपत्राश्रितौ कर्णपाशौ; तथा जाने दाक्षिणात्यायाः कस्या अपि योषितः प्रतिकृतिरियम् ।

**राजा**—( विलोक्य सस्पृहम् )

अशेषाणां मध्ये जलनिधिमणीनां गुणजुषः
परं मुक्ता व्यक्तं दधतु हृदि दर्पं किमपरैः ?
अयं यासां मल्लीमुकुलनवदामद्युतिहरः
प्रभातारो हारः स्वपिति सुखमस्याः स्तनतटे ॥ १८ ॥

किञ्च—

दासस्तस्य गजान्वयार्णवमणेः स्तम्बेरमस्य स्वयं
पौलोमीकृतचित्रकर्बुररदः सोऽप्यभ्रमूवल्लभः ।
यद्दन्तान्तविनिर्मिते प्रचलनप्रेङ्खोलिनी कुण्डले
काण्डीरस्मरपाण्डुगण्डफलकावस्याश्चिरं चुम्बतः ॥ १९ ॥

( पुनः सविनयम् ) मुने ! सर्वथा कथय किमिदम् ?

**कापालिकः**—प्राणात्ययेऽपि किमसत्यमाभाष्यते ?

**राजा**—भवतु तावत्, कथय कुत्रेयं समासादिता ?

**कापालिकः**—अत्रैव कानने।

**राजा**—यद्येवं ध्रुवमियं देवताप्रतिकृतिः काऽपि कस्यापि युगादिदेवदेवतायतनवन्दनार्थमागतस्त्रि (स्यत्त्रि) दशस्य हस्तान्निपतिता, अनेन च समासादिता।

**विदूषकः**—(१) भो ! दाव पच्छा एदा जाणेयव्वा, पढमं एदाए समीवे मं धरेध; जेण दिट्ठिदोसो से न भोदि।

**राजा**—(सप्रमोदम्) साधु वयस्य ! साधु सर्वथा केलिकुशलोऽसि। (दिशोऽवलोक्य) काऽत्र भोः ! करङ्कवाहिनीषु ?

(प्रविश्य)

**युवतिः**—(२) एसा चिट्ठामि।

**राजा**—अयि मकरिके ! वयस्याय प्रसादताम्बूलं प्रयच्छ।

**मकरिका**—(तथा कृत्वा) (३) भट्टा ! किं एदं महन्ता पयत्तेण अवलोईयदि ?

**राजा**—आयुष्मति ! देवताप्रतिकृतिरियम्।

**मकरिका**—(विलोक्य, विमृश्य च) (४) भट्टा ! न एसा देवयापडिकिदी।

**राजा**—(ससम्भ्रमम्) तर्हि किमेतत् ?

**मकरिका**—(५) जइ मे पारितोसिअं किंपि भट्टा पयच्छदि[1], ता कहेमि।

**राजा**—(सादरम्) निषधां तुभ्यं पारितोषिकं दास्यामि। भृशमावेदय।

**मकरिका**—(६) भट्टा ! एसा विदब्भाहिवइणो भीमरहस्स पुत्तीए दमयंतीए पडिकिदी।

(१) भोस्तावत् पश्चादेषा ज्ञातव्या। प्रथममेतस्याः समीपे मां धरत, येन दृष्टिदोषोऽस्या न भवति।

(२) एषा तिष्ठामि। (३) भर्तः ! किमेतत् महता प्रयत्नेनावलोक्यते ?

(४) भर्तः ! नैषा देवताप्रतिकृतिः।

(५) यदि मे पारितोषिकं किमपि भर्ता प्रयच्छति, तदा कथयामि।

(६) भर्तः ! एषा विदर्भाधिपतेर्भीमरथस्य पुत्र्या दमयन्त्याः प्रतिकृतिः।

१ क. पअच्छदि।

राजा—कथं पुनर्ज्ञातवती भवती ?

मकरिका—( १ ) भट्टा ! कुंडिणपुरे मे मादिकुलं । तदहं सव्वं पि विदब्भवुत्तंतं जाणेमि ।

राजा—( स्वगतम् ) सम्भवत्येतत् । उक्तं ह्यानेन कापालिकेन यथाऽहं साम्प्रतं विदर्भमण्डलादायातः । ( प्रकाशम् ) मुने ! दमयन्तीप्रतिकृतिरियम् ?

कापालिकः—ब्रह्मचारिणो वयम्, न योषित्कथां प्रथयामः ।

राजा—( सरोषम् ) पाखण्डिचाण्डाल ! कौक्कुटिक ! तापसच्छद्मा प्रणिधिरसि । कोत्र भोः ?

( प्रविश्य )

दण्डपाणिः पुरुषः—एषोऽस्मि ।

राजा—अये भीम ! एनं नियम्य कारायां क्षिप ।

पुरुषः—यदादिशति देवः ( इत्यभिधाय कापालिकं जटासु गृहीत्वा भीमो निष्क्रान्तः )

कलहंसः—मूर्त्या शान्तात्मेवायं परमतीव दुष्टः । भद्रया मुद्रयैव प्रतिहतममृदृशां पाखण्डिनां शान्तात्मत्वम् । अपि च—

शान्तात्माऽपि खलः खलः कथमपि व्यारूढवाहावमो-
च्छेदस्यापि सतो न वर्त्म चरितुं जङ्घालकेलिक्रमः ।
इन्दोः कुन्दसितैश्रितापि परितो दोषैव दोषा करै-
श्छन्नस्यापि पयोधरैः प्रतिदिशं नाङ्कः श्रियं गाहते ॥ २० ॥

( पुनर्विमृश्य ) मकरिके ! सत्यं मानुषीप्रतिकृतिरियम् ?

मकरिका—( २ ) किं अन्नहा भट्ट(ट्टि)णो विन्नवीयदि ?

राजा—

कामं कामं कुसुमधनुषोऽप्यावहन्ती सशोके
लोकेऽप्यस्मिन् यदि मृगदृशामीदृशी रूपलक्ष्मीः ।
क्लेशाकीर्णे तपसि विपुलस्वर्गभोगोत्सुकानां
मन्दीभूता खलु तदधुना प्राणभाजां प्रवृत्तिः ॥ २१ ॥

( पुनर्विमृश्य ) वयस्य ! त्वत्प्रयत्नकृतोऽयमस्माकं रत्नलाभः । कोऽत्र भोः ?

( १ ) भर्तः ! कुण्डिनपुरे मे मातृकुलम्, तदहं सर्वमपि विदर्भवृत्तान्तं जानामि ।

( २ ) किमन्यथा भर्तुर्विज्ञप्यते ?

१ ख. गैद्रया ।

( प्रविश्य )

पुरुषः—एषोऽस्मि।

राजा—अये माकन्द ! खरमुखाय कनकालङ्कारं प्रयच्छ।

( यदाज्ञापयति देव इत्यभिधाय माकन्दो निष्क्रान्तः )

विदूषकः—( १ ) जिदं मए जिदं मए। ( ऊर्ध्वबाहुः प्रनृत्यति )

राजा—( स्मित्वा )

संयोगे श्रीमदो भोगे वैकल्यस्य निबन्धनम्।
ततस्तु वस्तुचिन्तायां शक्त्या श्रीरधिका मदात्॥ २२॥

( पुनः साभिलाषं प्रतिकृतिमवलोक्य स्वगतम् ) विफल एव ममावतारो जगति यदेतया सह सलीलमत्रोपवने न विहरामि। ( प्रकाशम् ) मकरिके ! दमयन्ती कन्यका ?

मकरिका—( २ ) अध इं।

राजा—अनुगृहीतोऽस्मि वेधसा ( पुनरपवार्य ) कलहंस ! त्रिजगतोऽप्यसुलभं वस्तु सम्पादयितुं न शक्नोषि ?

कलहंसः—किमपरमुच्यते ? यदि मत्प्राणैरपि सम्पद्यते, तदा सम्पादयामि।

( नेपथ्ये तूर्यध्वनिः )

कलहंसः—देव ! युगादिदेवदेवतायतनसन्ध्याबलिपटहध्वानिरयम्।

राजा—( स्वगतम् ) अहो ! परमं शकुनम्। ( पुनर्विमृश्य ) प्रेषयाम्येनं दमयन्त्याः पार्श्वे। इयं च मकरिका विदर्भभाषावेषाचारकुशला सहैव यातु।

( पुनर्नेपथ्ये )

भो भो गन्धर्वलोकाः ! स्वकार्याणि कृत्वा शीघ्रमागच्छत युगादिदेवसन्ध्यासङ्गीतकमनुष्ठातुम्।

राजा—( सप्रमोदमात्मगतम् ) अहो ! प्रयोजनसमर्थः शब्दपातः। ध्रुवमयं कलहंसः प्रयोजनमाधाय शीघ्रमायास्यति। भवतु। ( प्रकाशम् ) कलहंस ! चित्र-

( १ ) जितं मया जितं मया। ( २ ) अथ किम्।

कर्मालङ्कर्मीणान्युपकरणानि प्रगुणयितुं व्रज । मकरिके ! वैदर्भीप्रतिकृतिं त्वं गृहाण वयस्य ! दर्शय पन्थानं येन सन्ध्याविधिमाधाय सौधमलङ्कुर्महे ।

( इति निष्क्रान्ताः सर्वे )

॥ प्रथमोऽङ्कः ॥

# द्वितीयोऽङ्कः ।

( नेपथ्ये )

स्वागतं कलहंसाय सपरिच्छदाय ।

( ततः प्रविशति कलहंसः मकरिकाप्रभृतिश्च परिवारः )

कलहंसः—कथं मत्तमयूरोद्यानरक्षकः शेखरोऽस्मदागमनमनुमोदते ?

( प्रविश्य )

शेखरः—आर्य कलहंस ! युष्मदागमनोत्कण्ठितोऽतीव देवो वर्त्तते । तदहं गत्वा निवेदयिष्यामि । ( इति निष्क्रान्तः )

कलहंसः—अयि मकरिके ! कच्चिदिदमभिहिता त्वया लम्बस्तनी ? यथा यावद् वयं त्वदागमनं देवाय विज्ञापयामः, तावत् त्वया मत्तमयूरोद्यान एव स्थातव्यम् ।

मकरिका—( १ ) अध इं ।

कलहंसः—अपि प्रगुणीकृतानि देवस्योपायनीकर्तुं विदर्भमण्डलोद्भवानि वस्तूनि ? ।

मकरिका—( २ ) सव्वमाचरिदं ।

( नेपथ्ये )

भो भोः सभाचारिणः ! प्रगुणीक्रियतां सिंहासनम् । अहो गन्धर्वलोकाः ! प्रारभ्यतां सङ्गीतकम् । इदानीमास्थानमलङ्करिष्यति देवः।

( १ ) अथ किम् । ( २ ) सर्वमाचरितम् ।

---

१ ख. अयि । २ क. ० स्योपनयनी० ।

कलहंसः—कथमयममात्यः किम्पुरुषो वदति ?

( नेपथ्ये )

( १ ) इदो इदो पियवयस्स ! ।

कलहंसः—मकरिके ! यथाऽयं खरमुखो व्याहरति, तथा जाने समायाति देवः । तदास्थानमुपसर्पाव । ( इति परिक्रामतः )

( ततः प्रविशति सिंहासनस्थो राजा, किम्पुरुष—खरमुखादिकश्च परिवारः )

राजा—( स्मृत्वा विदूषकं प्रति ) वयस्य ! प्राप्तः कनकालङ्कारः ?

( प्रविश्य )

शेखरः—देव ! प्राप्तः ।

राजा—( ससम्भ्रमम् ) कः प्राप्तः ?

शेखरः—देव ! दिष्ट्या वर्धसे । प्राप्तो मत्तमयूरोद्यानं सपरिच्छदः कलहंसः

किम्पुरुषः—न केवलमुद्यानं सभां च ।

( कलहंस उपसृत्य मकरिकया सह प्रणमति )

राजा—( बाहुभ्यामाश्लिष्य ) अपि कुशलवान् कलहंसः ? कुशलवती मकरिका ?

कलहंसः—देवस्य प्रतापेन ।

राजा—( सौत्सुक्यम् ) समर्थितमनोरथः समायातोऽसि ?

कलहंसः—न समर्थितमनोरथः ।

राजा—हताः स्मः ।

कलहंसः—किञ्च सम्भावितमनोरथोपायः समायातोऽस्मि ।

राजा—( सहर्षम् ) अनुगृहीताः स्मः । उपायसम्भावनायामुपेयमपि सम्भाव्यते । भवतु तावत् । दृष्टवानसि विदर्भराजात्मजाम् ?

कलहंसः—देव ! अदृष्टविदर्भराजात्मजस्य कलहंसस्य विदर्भगमनं निष्फलम् ।

राजा—न केवलमदृष्टविदर्भराजात्मजस्य कलहंसस्य विदर्भगमनं निष्फलं, जन्मापि । तदलं वाचालताविस्तरेण । प्रथमं तावद् दमयन्तीतनुचारिमाणं समासतो विज्ञपय ।

( १ ) इत इतः प्रियवयस्य ! ।

१ ख. ०वयस्सो । २ ख. वर्धाप्यसे । ३ ख. अयि । ४ ख. विदर्भाधिरा० ।

कलहंसः—-अयं समासः ।

राजा—( सप्रमोदम् )

वैदर्भीतनुवर्णनां रसघनश्रोतव्यसीमामिमा-
माकर्ण्य श्रवणौ ! युवां गमयथः स्वं जन्म तावत्फलम् ।
त्रैलोक्याद्भुतरूपदर्शनसुधासम्पर्कहेतुः पुनः
पुण्यं वां नयने ! फलिष्यति वपुर्लावण्यपुण्योत्सवे ॥ १ ॥

कलहंस ! सावधानोऽस्मि ।

कलहंसः—देव !

काव्यं चेत् सरसं किमर्थममृतं वक्त्रं कुरङ्गीदृशां
चेत् कन्दर्पविपाण्डुगण्डफलकं राकाशशाङ्केन किम् ?
स्वातन्त्र्यं यदि जीविताावधि मुधा स्वर्भूर्भुवो वैभवं
वैदर्भी यदि वृद्धयौवनभरा प्रीत्या सरत्याऽपि किम् ? ॥ २ ॥

राजा—( सहर्षमात्मगतम् ) यदि सयौवनायां विदर्भराजतनयायां रति-प्रीत्योः पुनरुक्तार्थता, तदानीम( मे )व स्थाने नलस्योत्कलिकाकापेयम् । ( पुनर्दिशोऽवलोक्य ) कथमास्थानीजनबहलकोलाहलेन कर्णयोः सप्रत्यूहो विदर्भराजात्मजालावण्यसौरभवर्णनामृतास्वादः ? ( प्रकाशम् । सरोषम् )

मञ्जीराणि रणन्ति वारयत हुं वाराङ्गनाश्चामर-
ग्राहिण्यो मणिकङ्कणावलिझणत्कारं चिरं रक्षत ।
पूर्णं पञ्चमगीतिरीतिभिरहो ! गन्धर्वलोकाः ! कथं
वैदर्भीगुणसङ्कथां स्वरतरैर्मुष्णा(थ पापाः ! स्वरैः ॥ ३ ॥

कलहंसः—अपि च देव !

विश्वस्य श्रवणेन्द्रियं सफलतां नेतुं पुरा भारती
वाचां रूपमुपास्य निर्मितवती वासं विदर्भाक्षितौ ।
वृद्धेर्ष्येव नरेन्द्रभीमतनयावेषं विधृत्याधुना
साफल्यं नयनेन्द्रियं गमयितुं देवी स्मरस्य प्रिया ॥ ४ ॥

१ क. ०जासौ० । २ ख ० वलिरणत्कारं ।

विदूषकः—( १ ) ही ही भो कलहंस ! सुट्ठु तए दमयंतीए अंगचंगत्तणं समासेण कहिदं, ता सत्थि भवदे भोदु ।

कलहंसः—( ससम्भ्रमम ) कथमार्यः खरमुखः? खरमुख ! नमस्ते ।

विदूषकः—( २ ) मह समाणविहवो होहि ।

मकरिका—( ३ ) अज्ज ! पणमामि ।

विदूषकः—( ४ ) मम सरिसं रूविणं पइं लहसु ।

राजा—( स्मित्वा ) अहो ! परमसम्पत्तिहेतुराशीर्वादः ।

विदूषकः—( ५ ) भो ! तए मह जोग्गं न किं पि विदब्भमंडलादो आणीदं ?

कलहंसः— अस्त्यानीतम् ।

राजा—( स्मित्वा सौत्सुक्यम् ) अलमप्रस्तुतेन । सविस्तरं विदर्भराजतनया-स्वरूपमावेदय ।

कलहंसः—देव !

चलकमलविलासाभ्यासिनी नेत्रपत्रे
दशनवसनभूमिर्बन्धुजीवं दुनोति ।
स्मरभरपरिरोहत्पाण्डिमागूढरूढ-
द्युतिविजितमृगाङ्का मोदते गण्डभित्तिः ॥ ५ ॥

राजा—यथायं कलहंसो वर्णयति, तथैव यदि तस्या अङ्गसन्निवेशो यदि च भगवाननुकूलो विरञ्चिस्तदा न निषधाधिपतेरपरो भूर्भुवःस्वस्त्रयेऽपि पुण्यप्रागल्भ्यवान् ।

विदूषकः—( ६ ) भो कलहंस ! ताए कन्नगाए मह वत्ता कावि पुच्छिदा ?

मकरिका—( ७ ) पुच्छिदा ।

विदूषकः—( सहर्षम् ) ( ८ ) किं ताए भणिदं ?

( १ ) अहो अहो ! भोः कलहंस ! सुष्ठु त्वया दमयन्त्या अङ्गचङ्गत्वं समासेन कथितम् । तत् स्वस्ति भवते भवतु ।

( २ ) मम समानविभवो भव । ( ३ ) आर्य ! प्रणमामि ।

( ४ ) मम सदृशं रूपिणं पतिं लभस्व ।

( ५ ) भोः ! त्वया मम योग्यं न किमपि विदर्भमण्डलादानीतम् ?

( ६ ) भोः कलहंस ! तया कन्यकया मम वार्ता काऽपि पृष्टा ?

( ७ ) पृष्टा । ( ८ ) किं तया भणितम् ?

मकरिका—( १ ) एदं भणिदं, सो गद्दहमुहो किं करेदि ?

विदूषकः—( सरोषम् ) ( २ ) हुं सा मं गद्दहमुहं भणादि, ता न तस्स वन्नणं सुणिस्सं ।

कलहंसः—अपरं च ।

कार्कश्यभूः स्तनतटी न गिरां विलासः
केशाः परां कुटिलतां दधते न चेतः ।
तस्याः कुरङ्गकदृशो नृपचक्रशक्र !
जाड्यं गतौ न तु मतौ विधृतावकाशम् ॥ ६ ॥

किम्पुरुषः—( स्वगतम् ) ध्रुवमीदृशस्य स्त्रीरत्नस्य सम्प्राप्तिर्भरतार्द्धराज्यमुपनयति ।

कलहंसः—अपि च स्वयं विमृश्य सोऽयमवयवानां सौन्दर्यलेशो देवाय विज्ञपितः । परमार्थेन तु—

वदनशशिनो नेत्राम्भोजद्वयस्य कपोलयोः
स्तनकलशयोर्दोष्णोर्नाभेर्नितम्बतटस्य च ।
तनुतनुलताज्योत्स्नावीचीनिमग्नदृशा मया
न खलु कलितो दोषः कश्चिद् गुणो न च कश्चन ॥ ७ ॥

विदूषकः—( सहर्षम् ) ( ३ ) ही ही भो ! तीए अयं ज्जेव महंतो दोसो जं सरीरे तेएण पिखिदुं पि न सक्कीयदि ।

राजा—( सस्पृहमात्मगतम् )

आः ! किं भविष्यति स कोऽपि कदापि विश्व-
कल्याणकन्दजलदप्रतिमो मुहूर्तः ।
यस्मिन् विदर्भतनयावदनेन्दुसङ्गा-
दुत्फुल्लमक्षिकुमुदं तदिदं मम स्यात् ॥ ८ ॥

कलहंसः—किञ्चिन्निर्निमेषनेत्रविषय एव वैदर्भीरूपप्रकर्षः प्रत्यक्षीकृतोऽपि न शक्यते वाचा वर्णयितुम् ।

( १ ) एतद् भणितम्, स गर्दभमुखः किं करोति ?

( २ ) हुं ! सा मां गर्दभमुखं भणति, ततो न तस्या वर्णनं श्रोष्यामि ।

( ३ ) अहो अहो ! भोः ! तस्या अयमेव महान् दोषो यत् शरीरे [illegible]ना प्रेक्षितुमपि न शक्यते ।

राजा—( सप्रश्रयमात्मगतम् ) निर्निमेषनेत्रविषय एव वैदर्भीरूपप्रकर्ष इति पदमस्माकमुपश्रुतिः। ध्रुवं भविष्यति तद्दर्शनं नः।

किम्पुरुषः—( सासूयमिव ) तदस्ति किं किमपि यत्कविगिरामप्यगोचरः?

राजा—( सरोषममात्यं प्रति ) अयुक्तमभिदधासि। यतः—

अधिका वर्णनी धर्ण्यात् क्वचिद् वर्ण्यं ततोऽधिकम्।
वर्ण्यस्याकान्ति-कान्तिभ्यां द्वयमप्युपपद्यते॥ ९॥
अत्यन्तकमनीयं हि स्तोतुं वाचोऽपि नेशते।
स्वरूपतः सुधास्वादं वक्तुं ब्रह्मापि न क्षमः॥ १०॥

तदलमतिविस्तरेण। कलहंस! कथय तावदितः स्थानाद् गतेन किमाचरितं त्वया?

कलहंसः—देव! देवप्रतिकृतिं दमयन्तीप्रतिकृतिं चादाय देवपादान् प्रणम्य कतिपयैरेवाहोभिरहं कुण्डिनमधिगतवान्।

राजा—( सत्वरम् ) ततस्ततः।

कलहंसः—अनन्तरमनया मकरिकया स्वाभिजनद्वारेण कथमप्यात्मनः कन्यान्तःपुरे प्रवेशः कृतः।

राजा—( सस्पृहम् ) आयुष्मति मकरिके! तत्रभवती भवती प्रथमं वैदर्भीं दृष्टवती?

मकरिका—( १ ) अंध इं।

राजा—ततस्ततः।

मकरिका—( २ ) तदो पडिदिणं सेवाववएसेण दमयंतीपासं गच्छामि, जधावसरं च देवस्स रूव-लावण्ण-विक्कमसमलंकिदं चरिदं विन्नवेमि।

राजा—( सत्वरम् ) ततस्ततः।

मकरिका—( ३ ) एगदा हरिसिदहियियाए दमयंतीए जंपिदं जधा-तुमं ज्जेव एगा निसढाहिवइणो इह अत्थि? आदु अन्नो वि को वि? तदो मए भणिदं-

( १ ) अथ किम्। ( २ ) ततः प्रतिदिनं सेवाव्यपदेशेन दमयन्तीपार्श्वं गच्छामि, यथावसरं च देवस्य रूप—लावण्य—विक्रमसमलङ्कृतं चरितं विज्ञपयामि।

( ३ ) एकदा हर्षितहृदयया दमयन्त्या जल्पितं यथा—त्वमेवैका निषधाधिपतेरिहासि, अथवाऽन्योऽपि कोऽपि? ततो मया भणितम्—

१ क. तत्रभवती प्र०।

अन्नो वि सव्वरहस्सट्ठाणं दुदियं पिव हिदयं निसढाहिवइणो पियवयस्सो कलहंसो नाम अत्थि ।

**किम्पुरुषः**—मकरिके ! वाग्मिनी खल्वसि । सर्वरहस्यस्थानं द्वितीयमिव हृदयं वदन्त्या त्वया रहस्यालापेषु निःशङ्का कृता राजपुत्री ।

**राजा**—ततस्ततः ।

**कलहंसः**—अस्वस्थशरीरा दमयन्तीति प्रघोषं विधाय वैद्यव्याजेनाहमनया विदर्भदुहितुरभ्यर्णं नीतः ।

**राजा**—( सप्रमोदम् ) मकरिके ! चतुराऽसि विकटकपटनाटकघटनासु । ( विमृश्य )

> सर्वथा कैतवं निन्द्यं प्रवदन्तु विपश्चितः ।
> केवलं न विना तेन दुःसाधं वस्तु सिध्यति ॥ ११ ॥

**किम्पुरुषः**—देव ! किमपरमुच्यते ?

> कामं शाठ्यव्यपोहेन परलोकः प्ररोहतु ।
> इहलोकप्रतिष्ठा तु शाठ्यपर्ण्यैव[1] निश्चितम् ॥ १२ ॥

**कलहंसः**—देव !

> निर्मायो यः कृपालुर्यः सत्यो यः सनयश्च यः ।
> प्रायेण तत्र लोकस्य क्लीबबुद्धिर्विजृम्भते ॥ १३ ॥

**राजा**—( सत्वरम् ) ततस्ततः ।

**कलहंसः**—समलङ्कृतासने मयि राजपुत्री सलीलमिदमभिहितवती-स भवान् कलहंसोऽसि ? ( स्ति ? )

**राजा**—अहो ! गिरां मधुरिमा । ततः ।

**कलहंसः**—मयोक्तम्-यथा जानाति देवी । ततो राजपुत्री 'समासतो विवक्षितमर्थमावेदय' इति निगदितवती । अनन्तरमहमुक्तवान् ।

**राजा**—( सौत्सुक्यम् ) किमुक्तवानसि ?

**कलहंसः**—इदमुक्तवानस्मि ।

---

अन्याऽपि सर्वरहस्यस्थानं द्वितीयमिव हृदयं निषधाधिपतेः प्रियवयस्यः कलहंसो नामास्ति ।

---

१ क.०पुण्यैव ।

शौण्डीरेषु भयोज्ज्वलेषु सुभगोत्तंसेषु च ग्रामणी-
देवो नैषधभूपतिः श्रुतमिदं स्वर्भूर्भुवो भूरिशः।
एतच्च प्रथितं विदर्भतनया यद् विश्वविश्वस्फुर-
च्छौर्यादिप्रसरं वरं स्पृहयति ब्रूमः किमन्यत् ततः ? ॥ १४ ॥

राजा—( स्वगतम् ) आः ! किमतः परं राजतनयाऽभिधास्यतीति यत्सत्य-माकुलोऽस्मि। भवतु ( प्रकाशम् ) ततः किमुक्तवती ?

कलहंसः—राजतनया न किंचित्।

राजा—( सखेदमात्मगतम् ) हा ! हताः स्मः !

कलहंसः—किन्तु कपिञ्जला नाम विदर्भराजचामरग्राहिणी समीपस्थितेद-मुक्तवती।

राजा—( ससम्भ्रमम् ) किमाह स्म सा ?

कलहंसः—इदमाह स्म सा। अनुरूपं योगं कर्तुमीहते स भगवान् कलहंसः।

राजा—( सहर्षमात्मगतम् ) इयत्प्रत्युज्जीविताः स्मः । जानाति तावदेत-त्परिकरलोको यथा दमयन्त्या निषधपतिरनुरूपो वरः। ( प्रकाशम् ) ततस्ततः।

कलहंसः—अनन्तरं च स्मितं कृत्वा राजतनया देवस्य प्रतिकृतिपटं मम करतलादादाय पुनः प्रतिकृतिं पुनः पुलककोरकितमात्मानं सुचिरमालोकितवती।

राजा—( ससम्भ्रमम् ) लक्षितः कोऽप्यवलोकनस्याभ्युपायः कलहंसेन ?

विदूषकः—( सरोषम् ) ( १ ) भो ! किं पुच्छेसि? पुलकिदेणं अंगेणं जेव निवेदिदं।

कलहंसः—लक्षितः कपिञ्जलावचनात्।

राजा—( ससम्भ्रमम् ) किं तत् कपिञ्जलावचः ?

कलहंसः—इदं वचो यथा देवि! किमर्थमत्यर्थमायास्यते पुनःपुनरवलोकनेन दृष्टिः ? सर्वथाऽनुहरत्येवैषा प्रतिकृतिर्देवीवपुषः।

राजा—साधु कपिञ्जले ! भावज्ञानकुशले ! साधु, ततस्ततः।

कलहंसः—अत्रान्तरे च देवी प्रतिकृत्या सह निरूप्यते न पुनर्मूलरूपेणेति वदन्ती मकरिका कापालिकानीतां प्रतिकृतिं राजपुत्र्या दर्शितवती।

( १ ) भोः ! किं पृच्छसि ? पुलकितेनाङ्गेनैव निवेदितम्।

राजा—समीचीनमाह मकरिका ।

यथा मुख्यस्य सौन्दर्यं प्रतिबिम्बस्य नो तथा ।
सूर्याचन्द्रमसौ वारिसङ्क्रान्तौ क्लान्ततेजसौ ॥ १५ ॥

कलहंसः—ततो मकरिके ! मत्करलिखितेयं प्रतिकृतिः कुतस्तवैतस्याः प्राप्तिरिति सरोषं राजपुत्री व्याहरत् ।

राजा—( सभयम् ) कोऽयमुत्पातः ? ततस्ततः ।

कलहंसः—अनन्तरं च कपिञ्जले ! प्रतिकृतिमेतां ताताय दर्शय, चित्रपटमेतं च देवतागृहे निधेहीत्यभिधाय राजतनया मां विसृष्टवती ।

राजा—( सभयम् ) कथं न किमपि प्रत्युत्तरम् ?

कलहंसः—किन्तु देवप्रतिकृतिपटस्य देवतागृहविमोचनेन दत्तमेव राजपुत्र्या प्रत्युत्तरम् ।

राजा—वाचिकं श्रोतुमिच्छामि ।

मकरिका—( १ ) इदं पच्छा मम कहिदं । जहा—

इह अत्थि घोरघोणो जहत्थनामा कवालिओ एगो ।
कूरत्तणस्स कवडित्तणस्स पढमं पइट्ठाणं ॥ १६ ॥
लंबत्थणी त्ति नामं भज्जा तस्सत्थि खुज्जतणुलट्ठी[1] ।
सयलाणं दोसाणं ठाणं दूई य मिहुणाणं ॥ १७ ॥

राजा—( कलहंसं प्रति ) असंस्कृतवागियं मकरिका न स्फुटमर्थमावेदयति । ततस्त्वमेव कथय ।

कलहंसः—घोरघोणेन च भीमरथाय सन्दिष्टम्, यथेयं दमयन्ती कलचुरिपतेर्भार्या भविष्यति ।

( १ ) इदं पश्चात् मम कथितम् । यथा—

मथेम।
...स्ति घोरघोणो यथार्थनामा कापालिक एकः ।
राजा—( स... कापट्यस्य प्रथमं प्रतिष्ठानम् ॥
१६। ...:—इदमुक्त... भार्या तस्यास्ति कुब्जतनुयष्टिः ।
क्रूरत्वस्य ... ...नं द्वितीयमिवं दूती च मिथुनानाम् ॥
लम्बस्तनीति नाम
सकलानां दोषाणां स्थान

१ ख. ग. जट्ठी ।

**राजा**—( सभयमात्मगतम् ) मुषिताः स्मः ( प्रकाशम् ) स घोरघोणः किमतीन्द्रियमर्थं जानाति ?

**कलहंसः**—दाम्भिकोऽयं न किमपि जानातीति तत्रत्याः कथयन्ति । मया पुनर्गवेषयतापि न कोऽपि दम्भो लक्षितः ।

**राजा**—अत्रार्थे तत्रत्याः प्रमाणं न भवान् । यतः—

आगन्तुकोऽनुरागं नेतुमविज्ञातदूषणः शक्यः ।
विज्ञातदूषणः खलु जनस्तु शक्यो न सहवासी ॥ १८ ॥

किन्तु कथय सहवास्यपि राजा केन हेतुना तस्य दम्भं नावधारयति ।

**कलहंसः**—राज्ञो व्यामोहो घोरघोणस्य च भाग्यमनवधारणे हेतुः ।

**राजा**—उपपन्नमिदम्—

जन्मिनां पूर्वजन्माप्तभाग्यमन्त्राभिमान्त्रितः ।
अचेतनोऽपि वश्यः स्यात् किं पुनर्यः सचेतनः ? ॥ १९ ॥

ततस्ततः ।

**कलहंसः**— ततो राजापि कापालिकप्रत्ययेन स्वदुहितरं चित्रसेनाय दातुमिच्छति ।

**राजा**—ततस्ततः ।

**कलहंसः**—ततो दमयन्त्या मकरिकाऽभिहिता यथा यदि निषधाधिपतिर्लम्बस्तनीं कथमप्यनुकूलयति, तदा पुनरपि सा तातं कदाग्रहान्निवर्तयति, मां च निषधाधिपतये दापयति ।

**राजा**—( सत्वरम् ) किं पुनर्लम्बस्तनी सहैव नानीता ?

**कलहंसः**—आनीताऽस्ति ।

**राजा**—क्वासौ ?

**कलहंसः**—अस्ति मत्तमयूरोद्याने ।

**राजा**—अये शेखर ! लम्बस्तनीं शीघ्रमाकारय ।

**शेखरः**—यदादिशति देवः ( इत्यभिधाय निष्क्रान्तः )

( ततः प्रविशति कटितटं नर्तयन्ती लम्बस्तनी )

**राजा**—( विलोक्य ) आकृत्या कृत्येव लक्ष्यते ।

---

१ क. कदाग्रहग्रहा० ।

**कलहंसः**—( अपवार्य ) न केवलमाकृत्या कर्मणाऽपीयं कृत्या। ( पुनर्विदूषकं प्रति ) तवापि योग्यमिदं मया विदर्भदेशादानीतम्।

**विदूषकः**—( विलोक्य सभयकम्पम् ) ( १ ) भो रायं! अहं एयाओ ठाणाओ उट्ठिस्सं।

**राजा**—किमिति?

**विदूषकः**—( २ ) जइ एसा थूलमहिसी कडियडं नच्चावंती ममोवरि पडेदि, ता धुवं मं मारेदि।

**राजा**—वयस्य! अस्मास्वनुग्रहेण राजपुत्र्येयं प्रेषिता, तदेतामवज्ञातुं नार्हसि।

**विदूषकः**—( ३ ) भो! न मए एदाए अवन्ना कीरदि, किन्तु अप्पणो रक्खा।

**राजा**—( सरोषमिव ) सर्वथा परिहासावसरं न वेत्सि।

**विदूषकः**—( निःश्वस्य ) ( ४ ) जदि मए मुदेण कावि फलसिद्धी भोदि, ता भोदु, इह ज्जेव चिट्ठिस्सं।

**राजा**—लम्बस्तनि! इदमासनमास्यताम्।

**विदूषकः**—( ५ ) भोदी लंबत्थणीए दुब्बलं खु एदं[1] आसणं। ता तुमए सावहाणाए उवविसियव्वं[2]।

( कलहंसः संज्ञया विदूषकं वारयति )

**राजा**—लम्बस्तनि! कुशलवत्यासि?

**लम्बस्तनी**—( मुखं नर्त्तयित्वा ) ( ६ ) अत्तणो जोगस्स पसादेण[3]।

**विदूषकः**—( ७ ) भोदी! किं अइदुब्बला सि?

**लम्बस्तनी**—( ८ ) मग्गपरिस्समेण।

( १ ) भो राजन्! अहमेतस्मात् स्थानादुत्थास्यामि।
( २ ) यद्येषा स्थूलमहिषी कटितटं नर्तयन्ती ममोपरि पतेत्, तदा ध्रुवं मा मारयेत्।
( ३ ) भोः! न मयैतस्या अवज्ञा क्रियते, किन्त्वात्मनो रक्षा।
( ४ ) यदि मया मृतेन काऽपि फलसिद्धिर्भवति, तदा भवतु, इहैव स्थास्यामि।
( ५ ) भगवति! लम्बस्तन्या दुर्बलं खल्वेतदासनम्, ततस्त्वया सावधानया उपवेष्टव्यम्।
( ६ ) आत्मनो योगस्य प्रसादेन। ( ७ ) भगवति! किमतिदुर्बलाऽसि?
( ८ ) मार्गपरिश्रमेण।

१ क. एयं। २ क. उववसि०। ३ क. पसाएण।

विदूषकः—(१) भो कलहंसा! कित्तिएहिं गोणेहिं मुद्दे (ट्टे) हिं [वा] एसा इध संपत्ता?

(कलहंसो विहस्याधोमुखस्तिष्ठति)

राजा—(सभयमात्मगतम्) ध्रुवमयमेतां दुरात्मा कोपयिष्यति। भवतु (प्रकाशम्) लम्बस्तनि! अकुटिलहृदयः प्रकृतिपरिहासशीलोऽयं ब्राह्मणः। तदस्य वचोभिर्न कोपितव्यम्।

लम्बस्तनी—(कटितटं करतलेनाहत्य, मुखं वक्रीकृत्य) (२) नाहमीदिसाणं गद्दहमुहाणं उत्तरं देमि।

राजा—(विहस्य) महाप्रभावा श्रूयते भवती। तदावेदय किमपि।

लम्बस्तनी—(सगर्वम्) (३) भो महाराय! अपुत्ताणं पुत्तं देमि, अणायारसंजादे[3] गब्भे पाडेमि, दुल्लहं पि पिअजणं संपाडेमि। किं बहुणा? जं तिहुयणे वि असज्झं तं साहेमि।

राजा—(अपवार्य कलहंसं प्रति) अहो धृष्टता! अहो निर्लज्जता! विमृश, संवदति किमप्येतदुक्तम्?

कलहंसः—न किमपि, गर्भपातं पुनर्जानाति।

राजा—(सविचिकित्सम्) अदृश्यमुखेयं तर्हि।

विदूषकः—(४) भोदी! एगं दाव मे संसयं भंजेहि। मह बंभणीए माया थूलकुट्टिणी जा पाडलिपुत्ते वसदि, सा किं तुमं आदु अन्ना का वि?

राजा—(सरोषम्) अयि मुखरब्राह्मण! नाद्यापि परिहासाद् विरमसि। (पुनर्लम्बस्तनीं प्रति) भविष्यति नः किमपि भवद्दर्शनफलम्?

(१) भो कलहंस! कियद्भिर्गुणैर्मूढैर्वै [वै] षाऽत्र सम्प्राप्ता?

(२) नाहमीदृशानां गर्दभमुखानामुत्तरं ददामि।

(३) भो महाराज! अपुत्रेभ्यः पुत्रं ददामि। अनाचारसंजातान् गर्भान् पातयामि। दुर्लभमपि प्रियजनं सम्पादयामि। किं बहुना? यत् त्रिभुवनेऽप्यसाध्यं तत् साधयामि।

(४) भगवति! एकं तावन्मे संशयं भङ्क्ष्व। मम ब्राह्मण्या माता स्थूलकुट्टिनी या पाटलिपुत्रे वसति, सा किं त्वमथवाऽन्या काऽपि?

१ ख. गुणेहिं मुदेहिं। २ ख. ग. श्रूयते त०। ३ क. ०संजाए। ४ क. संपडावेमि।

**लम्बस्तनी**—( १ ) अवस्सं भविस्सादि ।

**राजा**—( अपवार्य ) तर्हि विदर्भजां सम्पादय ।

**लम्बस्तनी**—( २ ) इत्थ को वि किं संदेहो ? एसा संपाडेमि ।

**राजा**—( सहर्षम् ) कोऽत्र भो भाण्डागारिषु ?

( प्रविश्य )

**पुरुषः**—एषोऽस्मि ।

**राजा**—अये कोरक ! एतस्याः सर्वाङ्गीणं कनकाभरणं प्रयच्छ ।

**कोरकः**—आदेशः प्रमाणम् ( इत्यभिधाय निष्क्रान्तः )

**राजा**—लम्बस्तनि ! त्वमपि स्वदेशे विजयस्व ।

**लम्बस्तनी**—( ३ ) सत्थि महारायस्स । ( इत्याभिधाय कटितटीं नर्तयन्ती निष्क्रान्ता )

**राजा**—( स्मृतिमभिनीय ) अमात्य ! लम्बोदरः कापालिकः कथं वर्तते ?

**किम्पुरुषः**—देव ! लम्बोदरो युवराजकूबरेण क्रीडापात्रं कर्तुं नीतोऽस्ति ।

**राजा**[1]—एवम् ( विमृश्य )

दुष्टसङ्गः कुमारस्य सोऽयं तेजःक्षयावहः ।
मार्तण्डमण्डलस्येव सैंहिकेयसमागमः ॥ २० ॥

**कलहंसः**—दुरात्मनः कापालिकस्य संसर्गाद् दुष्प्रकृतिरपि काऽपि कुमारस्य सम्भाव्यते ।

**किम्पुरुषः**—प्रतिहतोऽयं वितर्कः । यतः—

शुभा वा लोकस्य प्रकृतिरशुभा वा सहभवा
परेषां संसर्गान्न खलु गुण-दोषौ प्रभवतः ।
अपां पत्युर्मध्ये सततमधिवासेऽपि मृदुतां
न यान्ति ग्रावाणः स्पृशति न च पाथः परुषताम् ॥ २१ ॥

( १ ) अवश्यं भविष्यति । ( २ ) अत्र कोऽपि किं सन्देहः ? एषा सम्पादयामि ।
( ३ ) स्वस्ति महाराजाय ।

---

१ क. राजा वि०

अपि च देवस्य निषधस्यापि सन्ततिर्दुष्प्रकृतिर्भवतीति श्रद्धालवोऽपि न प्रतिपद्यन्ते, किमङ्ग ! हृदयालवः ?

कलहंसः—( सरोषम् ) प्रतिहततमोऽयं वितर्कः।

भजन्ते कार्याणि प्रकृतिविभवं कारणगतं
प्रवादो लोकानां ध्रुवमयमनेकान्तकलुषः।
मृदुत्वं तत् किञ्चिज्जलदपयसां विश्वविदितं
स कश्चिन्मुक्तानामथ च किल काठिन्यनिकषः॥ २२ ॥

राजा—किमपरमुच्यते ?

असौ पाखण्डिचाण्डालो युवराजस्य निश्चितम्।
वातापितापकारीव विन्ध्यस्योन्नतिघातकः॥ २३ ॥

( नेपथ्ये )

अखिलानां विसिनीनां कमलमुखान्येकहेलया द्रष्टुम्।
गगनाचलगर्भमसावधिरोहति कमलिनीनाथः॥ २४ ॥

राजा—( स्वगतम् ) कथमयं मागधो मध्यन्दिनवर्णनापदेशेन प्रियामुखदर्शनं पिशुनयति ! भवतु ( प्रकाशम् ) कलहंस ! दर्शय मार्गं, येन मध्याह्नस्नानाय व्रजामः।

( इति निष्क्रान्ताः सर्वे )

॥ द्वितीयोऽङ्कः ॥

१ क. ॰लवो न।

# तृतीयोऽङ्कः ।

( ततः प्रविश्य )

कुरङ्गकः—( उच्चैःस्वरमाकाशे ) अये मुकुल[1] ! बकुलप्रभृतीनि प्रगुणय सुरभिकुसुमानि । उपनय पाकाताम्राम्रप्रमुखानि फलानि । ननु पञ्चबाणायतनमिदानीं देवी दमयन्ती सगन्धर्वलोका समलङ्करिष्यति ।

( प्रविश्य )

मुकुलः—आर्य कुरङ्गक ! सर्वं प्रगुणमेव पूजोपकरणम्, किन्तु कथय किन्निमित्तोऽयमद्य सकलेऽपि राजकुले संरम्भः ?

कुरङ्गकः—( सरोषमिव ) अये सरल मुकुल ! वैदेशिक इव लक्ष्यसे । एतदपि न जानासि, ननु देव्या दमयन्त्याः श्वः स्वयंवरविधिः ।

मुकुलः—श्वः स्वयंवरविधिः ?

कुरङ्गकः—अथ किम् ।

मुकुलः—( विचिन्त्य ) ननु दमयन्तीं चेदिपतये चित्रसेनाय दातुमभिलाषुको विदर्भपति[3]रासीत् ।

कुरङ्गकः—आसीत् प्रतिकृतिदर्शनात् पूर्वम्[2] ।

मुकुलः—( ससम्भ्रमम् ) विततमावेदय ।

कुरङ्गकः—तां निषधादागतां दमयन्तीप्रतिकृतिमालोक्य कथमियं निषधायां गतेति गवेषयता देवेन ज्ञातं यथा—घोरघोणः कापालिको दमयन्तीपरिणयनोत्कण्ठितस्य चित्रसेनस्य मेषमुखनामा प्रणिधिः । सोऽपि लम्बोदरोऽस्यानुचरः कोष्ठकनामा चार एव ।

मुकुलः—( सत्वरम् ) ततस्ततः ।

कुरङ्गकः—ततो धर्मकर्मविप्लवमवधार्य छिन्नकर्णौष्ठनासिकया लम्बस्तनिकया सह गर्दभमारोप्य देवेन घोरघोणो निर्विषयः कृतः ।

मुकुलः—( साश्चर्यम् ) पश्य मलिनकर्माऽपि कियतीं प्रतिष्ठामधिरोपितो देवेनायं घोरघोणः ।

---

१ क. मुकुल मुकुल० २ क०लापो । ३ क. ०पते० ।

कुरङ्गकः—विस्मयनीयं नैवैतत् ।

आस्तां क्षयं किमिह पातकिनो न यान्ति
यान्ति श्रियं समधिकां किमु धार्मिकेभ्यः ।
तेनासमञ्जसमसौ रचयन् विशङ्को
लोकाश्चिरं भ्रमसि वाचि तनौ च हृष्येत् ॥ १ ॥

मुकुलः—साम्प्रतं क्वासौ ?

कुरङ्गकः—साम्प्रतमसौ निषधामधिवसतीति श्रूयते ।

( नेपथ्ये )

भोः ! कः साम्प्रतं निषधामधिवसति ?

कुरङ्गकः—( प्रणम्य ) देव ! कापालिकघोरघोणः ।

राजा—( स्वगतम् ) लम्बोदरोपजनितवासनेन युवराजकूबरेण समाहूतः । भवतु ( प्रकाशम् ) भो भोः सैन्याः ! बहिः स्थातव्यं बहिः स्थातव्यम् । न खलु सहकारनिकराभिरामः सोढुमलमयमारामश्चक्रावमर्दम् ।

कुरङ्गकः—( मुकुलं प्रति ) एहि स्वस्थानं व्रजामः ।

( इति प्रणम्य निष्क्रान्तौ )

राजा—अहो ! वसन्तावतारव्यतिषङ्गरङ्गत्परिभोगमखिलं जगत् ।

परिमलभृतो वाताः शाखा नवाङ्कुरकोटयो
मधुकररुतोत्कण्ठाभाजः प्रियाः पिकपक्षिणाम् ।
विरलविरलस्वेदोद्गारा वधूवदनेन्दवः
प्रसरति मधौ धात्र्यां जातो न कस्य गुणोदयः ? ॥ २ ॥

( दिशोऽवलोक्य )

अभिनभः प्रसृतैर्नवमल्लिकाकुसुमपुञ्जरजोभिरयं मधुः ।
यवनिकां विदधाति वियोगिनां शशिकरव्यतिषङ्गनिवृत्तये ॥ ३ ॥

कलहंस ! विदितवृत्तान्तः स भवान् विदर्भाणाम् । तद् विलोकय किमप्यतिरमणीयमत्र कुसुमाकरोद्यानेऽस्माकमावासस्थानम् ।

कलहंसः—यदादिशति देवः ।

**विदूषकः**—( १ ) ही ही ! पडिपुन्ना मे बंभणीए मणोरधा । सत्थिवायणगं पि किं पि दाणं मे रायदुहिया पडिवादयस्सदि । अधवा न सत्थिवायणं करिस्सं, सा मं गद्दहमुहं भणदि । भोदी मयरिए ! णं पुच्छामि, सव्वकज्जे वि विदब्भपुत्ती मं गद्दहमुहं वाहरदि ?

**मकरिका**—( स्मित्वा ) ( २ ) न परं गद्दहमुहं, मक्कडकन्नं वंकपायं च ।

**विदूषकः**—( ३ ) हला मुहरे ! सुमरेसि ऐदं भणिदं ?

**राजा**—( स्वगतम् )

आमन्त्रिता वयमतः प्रमदः परेऽपि
सन्त्यागताः क्षितिभुजोऽथ विषादतापः ।
अङ्गं विधानमिव सन्धिषु रूपकाणां
तुल्यं स्वयंवरविधिः सुख-दुःखहेतुः ॥ ४ ॥

**कलहंसः**—अयं तरुणतरणिकिरणकरणिधारिचारुप्रवालपटलपुलकितानेकशाखाप्रतानविनिवारितातपप्रचारः सहकारस्तदास्यतामस्यालवालवारिशीकरासारोपगूढप्ररूढहरितोपजातपरभागे मूलभागे देवेन ।

**राजा**—( तथा कृत्वा ) कलहंस ! पश्य सहकारशाखासनीडे नीडे ।

प्रियतमावदनेन्दुविलोकितैरसुहितः कलकण्ठयुवा नवः ।
प्रतिमुहुः प्रतिगत्य नभस्तलाद् वलति याति वलत्यथ यात्यथ ॥ ५ ॥

**अपि च**—

उत्तंसकौतुकनवक्षतदक्षिणाशा-
शाखाग्रपल्लवलवा सहकारवीथी ।
सेयं समादिशति नः स्फुटमङ्गनानां
सद्यः सलीलगतमञ्चितगौरवनानाम् ॥ ६ ॥

( १ ) अहो अहो ! प्रतिपूर्णा मे ब्राह्मण्या मनोरथाः । स्वस्तिवाचनकमपि किमपि दानं मे राजदुहिता प्रतिपादयिष्यति । अथवा न स्वस्तिवाचनं करिष्ये, सा मां गर्दभमुखं भणति । भवति मकरिके ! त्वां पृच्छामि—सर्वकार्येऽपि विदर्भपुत्री मां गर्दभमुखं व्याहरति ?

( २ ) न परं गर्दभमुखम्, मर्कटकर्णं वक्रपादं च ।

( ३ ) अरे मुखरे ! स्मरसि एतद् भणितम् ?

१ क. एवं । २ ख. ग. ०परभागे दे०

कलहंसः—

स्विद्यन्नितम्बभरपूरनिमग्नपार्ष्णि-
भागातिनिम्नपदपद्धतिबन्धुराङ्गी ।
स्त्रीणां न केवलमसौ सहकारवीथी
यातं दिशत्यवनिरप्यवनीशचन्द्र ! ॥ ७ ॥

राजा—( कर्णं दत्त्वा स्वगतम् ) कथमनक्षरगीतध्वनिः ? ( प्रकाशम् ) कलहंस ! शृणोषि किमपि ?

विदूषकः—( १ ) चीरीयाणं महुरं रसिदं सुणेमि ।

राजा—धिग् मूर्ख ! नन्वेष—

उत्कर्णयन् वनविहारिकुरङ्गयूथा--
न्याश्लेपयन् विरहकान् कलिकाकलापैः ।
सम्पूर्णपञ्चमकलासुभगम्भविष्णुः
कर्णौ विनिद्रयति मुद्रितगीतनादः ॥ ८ ॥

कलहंसः—यथाऽऽदिशति देवः ।

राजा—अहह ! सहृदयहृदयापहारिहारितम ( मा ) शेषविषयेशखरो गीतनादः । कलहंस !

अजल्प्यं जल्पामः किमपि किल पाषाणसुहृदां
सदा तेषां भूयाज्जगति पुरुषाणामजननिः ।
असारं संसारं विदधति न सारं प्रतिमुहुः
पिबन्तो ये मूक्तीरथ च कलगीतीर्मधुमुचः ॥ ९ ॥

अपि च—

न गीतशास्त्रमर्मज्ञा न तत्त्वज्ञाश्च ये किल ।
अपौरपशुदेश्येभ्यस्तेभ्यः पुम्भ्यो नमो नमः ॥ १० ॥

कलहंसः—देव !

आस्तां मर्मपरिज्ञानं येषां गीतस्पृहाऽपि न ।
कुरङ्गेभ्योऽपि हीनेषु मर्त्यत्वं तेषु वैशसम् ॥ ११ ॥

( १ ) चीरीकाणां मधुरं रसितं शृणोमि ।

राजा—अलमलमतिविस्तरेण। जानीहि कुतस्त्योऽयं पञ्चमोद्गारसारः समुच्छलति गीतामृतासारः?

कलहंसः—( किञ्चित् परिक्रम्य पश्यति ) देव! दवीयसि काननोद्देशे बहलपल्लवाविलानेकतिलकचम्पकप्रभृतितरुतिरोहितं देवताऽऽयतनम्।

राजा—न केवलं देवतायतनं पण्याङ्गनाचक्रं[1] च सङ्गीतकमादधानमवलोकयामि। ( सर्वे निपुणमवलोकयन्ति ) कलहंस! पश्य पश्य।

प्रेङ्खाविघट्टनरुषा कलहायमान-
दोर्वल्लिकङ्कणरणत्कृतिपीतगीतम्।
नृत्यं कुरङ्गकदृशां विलसद्विलास-
मुल्लासयेत् स्मरमते दृषदोऽपि रन्तुम्॥ १२॥

( विमृश्य ) कलहंस!

सर्वेषामपि सन्ति वेश्मसु कुतः कान्ताः कुरङ्गीदृशो
न्यायार्थी परदारविप्लवकरं राजा जनं बाधते।
आज्ञां कारितवान् प्रजापतिमपि स्वां पञ्चबाणस्ततः
कामार्त्तः क्व जनो व्रजेत् परहिताः पण्याङ्गनाः स्युर्न चेत्॥ १३॥

पुनः कामसर्वस्वगर्भम्। यदि वा—

शृङ्गारसौरभरहस्यजुषां विधातुं
पण्याङ्गनाः समुचितं किमु नेत्रपात्रम्?
कुर्वन्ति याः कुसुमकार्मुकजीवितस्य
शर्म श्रियो रतिभुवः किल मूल्यमात्रम्॥ १४॥

कलहंसः—एवमेतत्।

विटचेष्टया यया किल कुलसुदृशो दृष्टयापि लज्जन्ते।
सैव च यासां देश्या[2] वेश्यास्ताः किं कृती स्पृहयेत्?॥ १५॥

राजा—कलहंस! निरूपय, किमस्ति काऽप्यस्मिन् पण्याङ्गनारङ्गे विदर्भदुहितुः सखी वा चेटी वा?

कलहंसः—यदादिशति देवः। ( इति परिक्रामति )

---

१ क. नृत्तं। २ ख. ग. देशो।

विदूषकः—(१) भो ! न गंतव्वं, अच्छरापेडयं खु एदं, न माणुसीपेडयं।

राजा—( सरोषम् ) खरमुखवचनमपि भवान् कर्णे करोति ! अनर्गलवदनोऽयं ब्राह्मणः, तद् गम्यताम्।

विदूषकः—(२) जय (इ) वि अहं अणग्गलवयणो बंभणो, तहावि एदस्स कलहंसस्स एगागिणो परमहिलाणं मज्झे गमणं न समुचिदं। ता एसा मयरिया गच्छदु।

राजा—( विहस्य ) वयस्य ! चिरादुपपन्नमभिहितवानासि । मकरिके ! त्वं व्रज।

मकरिका—( कतिचित् पदानि गत्वा प्रतिनिवृत्त्य मरभमम् ) (३) भट्टा ! दिट्ठिया दिट्ठियां[1]।

राजा—किं किं सुमुखि ?

मकरिका—(४) एसा कविंजलादत्तावलंबा देवी दमयन्ती संगीदयं कारयंती कामायदणमंडवे चिट्ठदि।

राजा—( सरभसमवलोक्य ) मकरिके ! एषा देवी दमयन्ती।

कलहंसः—सत्यमेतदनुभूतं तर्हि रूपदर्शनमात्रकेणापि निषधाधिपतिना निजस्य जन्मनः फलम्।

विदूषकः—(५) भो ! जधा एसा पुणो पुणो इदो दिट्ठिं पट्ठवेदि, तधा जाणे मं नवजुव्वणं बंभणं निरूवेदि।

(१) भोः ! न गन्तव्यम्, अप्सरःपेटकं खल्वेतत्, न मानुषीपिटकम्।

(२) यद्यप्यहमनर्गलवदनो ब्राह्मणः, तथाप्येतस्य कलहंसस्यैकाकिनः परमहिलानां मध्ये गमनं न समुचितम्; तदेषा मकरिका गच्छतु।

(३) भर्तः ! दिष्ट्या दिष्ट्या।

(४) एषा कपिञ्जलादत्तावलम्बा देवी दमयन्ती संगीतकं कारयन्ती कामायतनमण्डपे तिष्ठति।

(५) भोः ! यथैषा पुनः पुनरितो दृष्टिं प्रस्थापयति, तथा जाने मां नवयौवनं ब्राह्मणं निरूपयति।

१ ख. ग. भट्टा दिट्ठिया।

**मकरिका**—( अपवार्य ) ( १ ) पडिहदो सि ।

**राजा**—सहकारतिरोहितास्तिष्ठामो येनेयं स्वैरं विहरति, वदति, विलोकयति च ।

( सर्वे तथा कुर्वन्ति । ततः प्रविशति यथानिर्दिष्टा दमयन्ती )

**दमयन्ती**—( २ ) सहि कविंजले ! कुसुमायरे निसिढावइणो आवासं जाणिय कामपूयाववएसेण अहं दाव इह समागदा । गवेसिदो य मए तरुनिरूवणामिसेण सयलो वि आरामो । परं न को वि कहिं पि दिट्ठो । ता किं नेदं, किं न किं पि मयरियामंतसरिसं भविस्सदि ?

**कपिञ्जला**—( ३ ) भट्टिणि ! मा उत्तम, आराम परिमलणसंकाए न को वि मज्झे पइट्ठो । किं न पिक्खदि देवी आरामपरिसरेसु समावासिदं सिन्नं ? अवि य सहयारवीहियाए माणुसाइं पि दीसंति ।

**राजा**—कथमस्मान् कपिञ्जला दर्शयति ! अहह पञ्चबाणबाणः कटाक्षविक्षेपः !

भयतरलकुरङ्गीनेत्रसब्रह्मचारी
विकचकुवलयश्रीरेष दृष्टेर्विलासः ।
परिणतपरिबोधोद्बोधधाम्नां मुनीना-
मपि मनसि विकारोद्गारमाविष्करोति ॥ १६ ॥

**कपिञ्जला**—( ४ ) भट्टिणि ! जाव को वि कुदो वि समागच्छदि, दाव मयणस्स पूयं निवत्तेहि । कोसलिए ! उवणेहि भट्टिणीपूओवगरणं ।

( १ ) प्रतिहतोऽस्मि ।

( २ ) सखि कपिञ्जले ! कुसुमाकरे निषधपतेरावासं ज्ञात्वा कामपूजाव्यपदेशेनाहं तावदिह समागता । गवेषितश्च मया तरुनिरूपणामिषेण सकलोऽप्यारामः, परं न कोऽपि क्वापि दृष्टः । तत् किं न्वेतत्, किं न किमपि मकरिकामन्त्रसदृशं भविष्यति ?

( ३ ) भर्त्रि ! मा उत्ताम्य, आरामपरिमर्दनशङ्कया न कोऽपि मध्ये प्रविष्टः । किं न प्रेक्षते देवी आरामपरिसरेषु समावासितं सैन्यम् ? अपि च सहकारवीथिकायां मनुष्या अपि दृश्यन्ते ।

( ४ ) भर्त्रि ! यावत् कोऽपि कुतोऽपि समागच्छति, तावत् मदनस्य पूजां निवर्तय । कौशलिके ! उपनय भर्त्रीपूजोपकरणम् ।

**दमयन्ती**—( १ ) अहं सयं उवचिणिय कुसुमाइं मयणं पूयइस्सं। ता चिट्ठदु कोसलिया, पयट्टावेह दाव संगीयं।

**राजा**—यथेयं पञ्चमस्य सुश्लिष्टमूर्छना तानेषु प्रतिमुहुः सुखायते, तथा जाने गीतमर्मज्ञा।

अविदितमर्मा कर्मसु न शर्म तज्जन्म चुम्बति प्रायः।
अकलितहृदयस्त्रीणां स्मरोपनिषदो बहिः प्लवते ॥ १७ ॥

( सत्वरम् ) मकरिके ! प्रभवसि राजपुत्रीमिह समानेतुम् ?

**मकरिका**—( २ ) अहं दाव पयदिस्सं, आगमणं पुण दिव्वस्स आयत्तं।

**राजा**—तर्हि यतस्व।

( मकरिका परिक्रामति )

**दमयन्ती**—( ३ ) कविंजले ! न को वि दाव समागदो, ता अंतेउरं वच्चामो।

**कपिञ्जला**—( ४ ) भट्टिणि ! दिट्ठिया दिट्ठिया समागदा मयरिया।

( मकरिका उपसृत्य प्रणमति )

**दमयन्ती**—( सहर्षमालिङ्ग्य ) ( ५ ) मयरिए ! अन्नो वि को वि समागदो, आदु तुमं ज्जेव ?

**मकरिका**—( ६ ) अन्नो वि।

**दमयन्ती**—( अपवार्य ) ( ७ ) कधं राया नलो ?

**मकरिका**—( ८ ) अध इं।

**दमयन्ती**—( सत्वरम् ) ( ९ ) कहिं सो ?

**मकरिका**—( १० ) एसो सहयारवीहियाए।

( १ ) अहं स्वयमुपचीय कुसुमानि मदनं पूजयिष्यामि। ततस्तिष्ठतु कौशलिका, प्रवर्तयत तावत् संगीतम्।

( २ ) अहं तावत् प्रयतिष्ये, आगमनं पुनर्दैवस्य आयत्तम्।

( ३ ) कपिञ्जले ! न कोऽपि तावत् समागतः, ततोऽन्तःपुरं व्रजामः।

( ४ ) भर्त्रि ! दिष्ट्या दिष्ट्या समागता मकरिका।

( ५ ) मकरिके ! अन्योऽपि कोऽपि समागतः, अथवा त्वमेव ?

( ६ ) अन्योऽपि। ( ७ ) कथं राजा नलः ? ( ८ ) अथ किम्।

( ९ ) क्व सः ? ( १० ) एष सहकारवीथिकायाम्।

**दमयन्ती**—( भुजमुत्क्षिप्य ) ( १ ) मयरिए ! एसो नलो ( पुनः सभयमात्मगतम् ) मा नाम विलासिणीलोएण दिट्ठम्हि । भोदु एवं दाव ( प्रकाशम् ) मयरिए ! एदस्स वि नामं तुमं न जाणासि ? णं तिणविसेसो एसो नलो ।

**कपिञ्जला**—( विहस्य ) ( २ ) सच्चं एसो नलो, न उण तिणविसेसो, किंतु तिणविसेसीकदअवरराजलोओ ।

**दमयन्ती**—( ३ ) कविंजले ! तुमं वंकभणियाइं जाणासि ।

**राजा**—( उपसर्प्य ) कलहंस !

सखीशङ्काशङ्कुप्रणयपरितापव्यसनिनी
त्रिभागाभोगाग्रप्लवनवहलीभूतशितिमा ।
द्रुमालोकव्याजाद् विषमपरिपाता मम वपुः
समं सेयं दृष्टिर्जडयति च संरम्भयति च ॥ १८ ॥

( विमृश्य )

कुचकलशयोर्वृत्तं नृत्तं भ्रुवोर्मृदुता गिरां
दृशि तरलता वक्त्रे कान्तिस्तनौ तनिमा तथा ।
तदिदमखिलं वेषश्चेतस्यहं यदि वल्लभो
ध्रुवमपरथा दोषः स्वार्थं जनो बहु मन्यते ॥ १९ ॥

**कलहंसः**—परमार्थोऽयम्

मांसदृशो गुण-दोषौ ब्रुवते स्वार्थास्तिभङ्गसापेक्षाः ।
ज्ञानदृशस्तु यथास्थितपदार्थवृत्तान्तमनुरुध्य ॥ २० ॥

**मकरिका**—( ४ ) भट्टिणि ! पसन्ना होहि ।

**दमयन्ती**—( ५ ) मयरिए ! अहं कया वि किं अप्पसन्ना, जं एवं मंतेसि ?

---

( १ ) मकरिके ! एष नलः ? मा नाम विलासिनीलोकेन दृष्टास्मि । भवतु एवं तावत् । मकरिके ! एतस्यापि नाम त्वं न जानासि ? ननु तृणविशेष एष नलः ।

( २ ) सत्यमेषो नलः, न पुनस्तृणविशेषः, किन्तु तृणविशेषीकृतापरराजलोकः ।

( ३ ) कपिञ्जले ! त्वं वक्रभणितानि जानासि ।

( ४ ) भर्त्रि ! प्रसन्ना भव ।

( ५ ) मकरिके ! अहं कदापि किमप्रसन्ना, यदेवं मन्त्रयसे ?

**मकरिका**—( १ ) कहं नाम न अप्पसन्ना, जं हिदयवल्लहं जणं पिच्छिय दूरं चिट्ठसि ?

**दमयन्ती**—( २ ) मयरिए ! नाहमिदिसं कन्नाजणस्स अणुचिदं अणुट्ठिदुं साहसिणी। किं च—

आलाव-हास-परिरंभणाइं पेमस्स परियरो एसो।
पेमं उण नयणतिभागभूरिपरिघोलिरा दिट्ठी ॥ २१ ॥

अन्नं च असरिससिणेहं जणं सयमणुसरंती कविंजलाए वि लज्जेमि।

**मकरिका**—( सरोषम् ) ( ३ ) सहयारवीहियं पि अणुसरंती सरिससिणेहा, महाराओ उण विदब्भेसु वि समागदो असरिससिणेहो ?

**दमयन्ती**—( ४ ) मयरिए ! न पारेमि तए सह जंपिदुं, ता मयणपूया-निमित्तं कुसुमाइं उवचिणिस्सं।

( इति सर्वाःपरिक्रामन्ति )

**राजा**—कथमितोऽभिवर्तते देवी ?

दृष्टे ! द्रष्टुमितः स्पृहां कुरु पुरः पुत्री विदर्भेशितु-
र्नेत्वागच्छति बिभ्रती स्मरकरिक्रीडावनं यौवनम्।
यद्वक्त्रेन्दुविलाससम्पदमतिश्रद्धालुरालोकितुं
पौलोमीपतिरुद्वहत्यनिमिषं चक्षुःसहस्रं किल ॥ २२ ॥

कलहंस ! उपनय पत्रमेकम्।

**कलहंसः**—इदम्।

---

( १ ) कथं नाम नाप्रसन्ना, यद् हृदयवल्लभं जनं दृष्ट्वा दूरं तिष्ठसि ?

( २ ) मकरिके ! नाहमीदृशं कन्याजनस्यानुचितमनुष्ठातुं साहसिनी। किञ्च—

आलाप-हास-परिरम्भणानि प्रेम्णः परिकर एषः।
प्रेम पुनर्नयनत्रिभागभूरिपरिघूर्णमाना दृष्टिः ॥

अन्यच्च, असदृशस्नेहं जनं स्वयमनुसरन्ती कपिञ्जलाया अपि लज्जे।

( ३ ) सहकारवीथिकामप्यनुसरन्ती सदृशस्नेहा, महाराजः पुनर्विदर्भेष्वपि समागतो-ऽसदृशस्नेहः !

( ४ ) मकरिके ! न पारयामि त्वया सह जल्पितुम्। ततो मदनपूजानिमित्तं कुसुमान्युपचेष्ये

( राजा किमपि पत्रकं लिखित्वा समर्पयति )

**दमयन्ती**—( १ ) कपिंजले ! कहिं वणोद्देसे वियइल्लवल्लियाओ चिट्ठंति ?

**मकरिका**—( २ ) एदस्सिं सहयारनिगुंजे ।

( दमयन्ती पुष्पावचयं नाटयति )

**राजा**—( उपसृत्य ) अलमलमनुचिताचरणेन । ननु ललाटन्तपे भगवति कमलिनीनाथे परमानुरागवेतनक्रीते च सविधभाजि सर्वकर्मीणे जने कोऽयं स्वयं विचकिलकलिकावचयक्लेशोपद्रवः ?

**दमयन्ती**—( तिर्यग् विलोक्य स्वगतम् ) ( ३ ) कहमेस सयं भयवं पंचबाणो ? अहवा वरायस्स अणंगस्स कुदो ईदिसो अंगसोहग्गपब्भारो ? ता कदत्थो दमयंतीए अंगचंगिमा । ( प्रकाशम् ) कविंजले ! को एस मं वारेइ ?

**कपिञ्जला**—( ४ ) जस्स कदे तुमं इध समागदा ।

**दमयन्ती**—( ५ ) कस्स कदे अहं इध समागदा ?

**कपिञ्जला**—( ६ ) हिययदइयस्स ।

**दमयन्ती**—( ७ ) ता किं भयवं मणसिजो ?

**कपिञ्जला**—( विहस्य ) ( ८ ) भट्टिणी जाणादि ।

**दमयन्ती**—( सरोषमिव ) ( ९ ) हंजे ! उवहसेसि मं, ता उवचिणिस्सं, न चिट्ठिस्सं ।

( राजा भुजलतामालम्ब्य 'अलमलम्' इत्यादि पठति )

**कलहंसः**—देवि ! दूरादागतस्य प्रणयिनो जनस्याभ्यर्थनां नावज्ञातुमर्हसि ।

**दमयन्ती**—( १० ) कधं कलहंसो ! कलहंस ! मोयावेहि मे पाणिं ।

( १ ) कपिञ्जले ! कस्मिन् वनोद्देशे विचकिलवल्ल्यस्तिष्ठन्ति ?

( २ ) एतस्मिन् सहकारनिकुञ्जे ।

( ३ ) कथमेष स्वयं भगवान् पञ्चबाणः ? अथवा वराकस्यानङ्गस्य कुत ईदृशोऽङ्गसौभाग्यप्राग्भारः ? तत् कृतार्थं दमयन्त्या अङ्गचङ्गत्वम् । कपिञ्जले ! क एष मां वारयति ?

( ४ ) यस्य कृते त्वमत्र समागता । ( ५ ) कस्य कृतेऽहमत्र समागता ?

( ६ ) हृदयदयितस्य । (७) तत् किं भगवान् मनसिजः ? ( ८ ) भर्त्री जानाति ।

( ९ ) हले ! उपहससि माम्, तद् उपचेष्यामि, न स्थास्यामि ।

( १० ) कथं कलहंसः ! कलहंस ! मोचय मे पाणिम् ।

**कलहंसः**—देवि ! कलहंसः पाणेर्ग्राहयिता, न पुनर्मोचयिता ।

**दमयन्ती**—(१) हीमाणहे ! न को वि मह पक्खपायं करेदि ।

**राजा**—शान्तं शान्तम् । हे मृगाक्षि ! नन्वयमस्मि तव पक्षपाती । समादिश कृत्यम् ।

**दमयन्ती**—(२) जइ एवं ता मुंच मे पाणिम् ।

**नलः**—कथमपराधकारी मुच्यते ?

**दमयन्ती**—(३) किं एदिणा अवरद्धं ?

**राजा**—अनेन त्वत्प्रतिकृतिमालिख्यायमियति विरहानले पातितः ।

**दमयन्ती**—(स्मित्वा) (४) जइ एवं ता अहं पि ते पाणिं गहिस्सं । तव पाणिलिहिदेण पडेण अहं पि एदावत्थसरीरा जादा ।

**राजा**—नन्वयं पाणिग्रहणार्थ एव सर्वः प्रयासस्तदनुकूलवादिन्यसि नलस्य ।

**विदूषकः**—(५) भोदी ! तए अप्पण ज्जेव अप्पा समप्पिदो, ता दाणिं न छुट्टीयदि ।

(दमयन्ती सात्विकभावान् नाटयन्त्यधोमुखी भवति)

**राजा**—(विलोक्य)

इमौ प्रेङ्खे कर्णौ वदनमिदमिन्दुः स्फुटकलः ।
कलः सोऽयं नादस्तरुणकलकण्ठीकलकलः ।
इयं मल्लीवल्लीपुलकमुकुलाङ्का भुजलता
वसन्तश्रीः साक्षात् त्वमसि मदिराक्षि ! ध्रुवमतः ॥ २३ ॥

(सहर्षं च—)

चन्द्रोद्यानसरांसि सुन्दरि ! मनः कर्षन्ति तावद् गुणै—
र्यावन्नेत्रदले तवास्यकमले दृष्टिर्न विश्राम्यति ।

(१) अहो ! न कोऽपि मम पक्षपातं करोति ।

(२) यद्येवं तदा मुञ्च मे पाणिम् । (३) किमेतेनापराद्धम् ?

(४) यद्येवं तदाऽहमपि ते पाणिं ग्रहीष्यामि, तव पाणिलिखितेन पटेनाहमप्येतदवस्थशरीरा जाता ।

(५) भवति ! त्वयाऽऽत्मनैवात्मा समर्पितस्तदिदानीं न छुटयते ।

तावत् कोऽपि कलालवो विजयते खद्योतपोतत्विषां
यावन्नात्मकरैर्धिनोति धरणिं देवः सुधादीधितिः ॥ २४ ॥

दमयन्ती—( १ ) अज्जउत्त ! ( पुनः सलज्जम् ) महाराय ! अधवा इदि देआंगे पतंगतावो, ता विरम पाणिग्गहणादो ।

राजा—अयि कातरकुरङ्गनेत्रे! कोऽयं वाङ्—मनसयोर्विवादः। ननु यथामनसमेवाभिधीयतामार्यपुत्रेति । अपि च शतपत्रपत्रत्त लाक्षि! यदि पतङ्गतापाबाधासाध्वसेन पाणिग्रहणाद् विरमामि, तदानीमनङ्गतापो मां बाधते। किञ्च—

चित्रं त्रस्तैणशावाक्षि ! त्वत्पाणिग्रहणोत्सवः ।
सन्तापस्य निहन्ता नः प्रतापस्य तु कारणम् ॥ २५ ॥

कपिञ्जला—( २ ) भट्टिणि! लज्जमुज्झिय पयडाणुरायं किंपि अणुचिट्ठ।

दमयन्ती—( सरोषमिव ) ( ३ ) हंजे ! तुमं पि कन्नगाजणविरुद्धे कम्मे मं निजोजयसि ?

राजा—अयि चन्द्रमुखि ! न त्वां कपिञ्जला योजयति । किन्तु कृतमानिनीमानभङ्गः स भगवाननङ्गः। अनङ्गाधीनो हि कुसुमाकरोद्याने सर्वस्य सर्वो व्यापारः। ( सर्वाङ्गीणमवलोक्य ) कुन्ददति! किञ्चिदुपालभ्यसे ।

दमयन्ती—( स्वगतम् ) ( ४ ) हीमाणहे! अप्पाणंमि वि आदिधेईकदे उवालंभो न मुंचदि ।

कपिञ्जला—( सभयमात्मगतम् ) ( ५ ) किं मए किमवि अवरद्धं ?

राजा—ननु ब्रवीमि, उपालभ्यसेऽभ्यन्तरपरिजनापराधेन ।

दमयन्ती—( ६ ) कहं विय ।

राजा—

वक्रेन्दुः स्मितमातनोदधिगते दृष्टी विकासश्रियं
बाहू कण्टककोरकाण्यविभृतं प्राप्ता गिरो गौरवम् ।

---

( १ ) आर्यपुत्र ! महाराज ! अथवा एति देवाङ्गे पतङ्गतापः. तद् विरम पाणिग्रहणात् ।
( २ ) भर्त्रि ! लज्जामुज्झित्वा प्रकटानुरागं किमपि अनुतिष्ठ ।
( ३ ) हले ! त्वमपि कन्यकाजनविरुद्धे कर्मणि मां नियोजयसि ?
( ४ ) अहो ! आत्मन्यपि आतिथेयीकृते उपालम्भो न मुच्यते ।
( ५ ) किं मया किमप्यपराद्धम् ? ( ६ ) कथमिव ?

किं नाङ्गानि तवातिथेयमसृजन् स्वस्वापतेयोचितं ?
सम्प्राप्ते मयि नैतदुज्झति कुचद्वन्द्वं पुनः स्तब्धताम् ॥ २६ ॥

( दमयन्ती सलज्जमधोमुखी भवति )

यदि वा देवि! शान्तम् । सत्यमहमेवोपालभ्यो यो गुणमपि दोषमभिदधामि ।

कपिञ्जला—( १ ) भट्टिणि! कदं कालविलंवेण, रहस्सं किं पि मंतेहि।

दमयन्ती—( २ ) नाहं रहस्सं मंतिदुं सिक्खिदा।

राजा—अयि स्मरनागरिके ! किमात्मानं वैदग्ध्यवन्ध्यमावेदयसि ? अपि चाहमस्मि शिक्षितः। कलहंस ! दर्शय रहस्यमस्मदीयम्।

( कलहंसः पत्रमर्पयति । दमयन्ती वाचयति )

अमीभिः संसिक्तैस्तव किमु फलं वारिदघटे!
यदेतेऽपेक्षन्ते सलिलमवटेभ्योऽपि तरवः।
अयं युक्तो व्यक्तं ननु सुखयितुं चातकशिशु-
र्य एष ग्रीष्मेऽपि स्पृहयति न पाथस्त्वदपरात् ॥ २७ ॥

दमयन्ती—( विमृश्य स्वगतम् ) त्वदेकशरणोऽहमित्युक्तं भवति। ( प्रकाशम् ) ( ३ ) कलहंस! मुद्धा खु अहं, न गूढभणिदीणमत्थं जाणामि।

राजा—किमेवमभिदधासि ? यतः—

मुग्धाङ्गनानयनपातविलक्षणानि
दक्षैरपि क्षणमलक्षितविभ्रमाणि।
आलोकितान्यपि नताङ्गि ! निवेदयन्ति
वैदग्ध्यसम्पदमनन्यतमां भवत्याः ॥ २८ ॥

यदि वा व्यक्तमपि विज्ञप्यते।

( १ ) भर्त्रि ! कृतं कालविलम्बेन, रहस्यं किमपि मन्त्रय ।
( २ ) नाहं रहस्यं मन्त्रयितुं शिक्षिता।
( ३ ) कलहंस ! मुग्धा खल्वहम्, न गूढभणितीनामर्थं जानामि।

कान्तस्तवाहमधरीकृतविश्वरूपः
सौन्दर्यविभ्रमवती भवती प्रिया मे ।
प्रेमावयोरनधिगम्यदशाधिरूढं
जानीहि नैप सुकरो विधिनापि योगः ॥ २९ ॥

( प्रविश्य )

चेटी—( १ ) भट्टिणि ! देवी तुमं हक्कारेदि ।

( राजा सभयं भुजमपनीय तिरोधत्ते )

दमयन्ती—( २ ) अंबा मं आणवेदि ? एसा समागच्छामि ।

( इति सर्वाः परिक्रामन्ति )

राजा—( सविषादम् ) कलहंस ! न कोऽपि कार्यनिर्व्यूहः समभूत् । हा ! हताः स्मः । कुतो नाम पुनरपि रहःसङ्गमः ?

विदूषकः—( ३ ) भो ! अहं से संगमं पुणरवि करेमि ।

राजा—( सादरम् ) अस्मदनुरोधेन प्रवर्त्तस्व ।

( विदूषकः खरनादितं करोति )

दमयन्ती–( आकर्ण्य ) ( ४ ) कधं एस रुक्खंतरिदो खरो वामं वाहरदि ? हला मयणिए ! असउणं मे, ताव गच्छ तुमं, अहं पुण सहयारवीहीए गडुय आगमिस्सं ।

( मदनिका निष्क्रान्ता । दमयन्ती प्रतिनिवर्तते )

विदूषकः–( ५ ) भोदी ! न तए मे बंभणस्स सत्थिवायणं दिन्नं, तदो असउणं ।

( १ ) भर्त्रि ! देवी त्वामाह्वयति ।

( २ ) अम्बा मामाज्ञापयति ? एषा समागच्छामि ।

( ३ ) भोः ! अहमस्याः सङ्गमं पुनरपि करोमि ( कारयामि ) ।

( ४ ) कथमेष वृक्षान्तरितः खरो वामं व्याहरति ? हले मदनिके ! अशकुनं मे, तावद् गच्छ त्वम्, अहं पुनः सहकारवीथ्या गत्वाऽऽगमिष्यामि ।

( ५ ) भवति ! न त्वया मे ब्राह्मणस्य स्वस्तिवाचनं दत्तम्, ततोऽशकुनम् ।

**दमयन्ती**–( पत्रके किमपि लिखित्वा ) ( १ ) एदं दे सत्थिवायणं ( षकस्य प्रयच्छति । राजानं प्रति ) महाराय ! सुदे ( सुवे ? ) पुणो वि संगमो ।

**राजा**—

कर्णेजपं क्षतमुदो विपदो वचस्त्वं
श्वःसङ्गमः पुनरतिप्रलयस्य शङ्का ।
त्वद्विप्रयोगशरणं क्षणमप्यहं तु
वर्षाणि देवि ! किल यामि परःशतानि ॥ ३० ॥

**दमयन्ती**–( २ ) अओ परं न पारेमि चिट्ठिदुं, ता गमिस्सं ( निष्क्रान्ता )

( राजा पत्रकं वाचयति )

सौदामिनीपरिष्वङ्गं मुञ्चन्त्यपि पयोमुचः ।
न तु सौदामिनी तेषामभिष्वङ्गं विमुञ्चति ॥ ३१ ॥

**कलहंसः**—देव ! अनयाऽप्यात्मनोऽनन्यशरणत्वमावेदितम् ।

**राजा**—नन्वयमुत्तरार्धस्यार्थः ।

**कलहंसः**—पूर्वार्धस्यार्थोऽनिष्टं सूचयति ।

**राजा**—( सभयम् ) किं तत् ?

**कलहंसः**—परिणयनानन्तरं दमयन्तीपरित्यागम् ।

**राजा**—शान्तम् । ननु नलो यदि दमयन्तीं परित्यजति, तदा निषधामभिजनं च । तदेहि शिबिरं व्रजामः ।

( इति निष्क्रान्ताः सर्वे )

॥ तृतीयोऽङ्कः ॥

( १ ) एतत् ते स्वस्तिवाचनम् । महाराज ! श्वः पुनरपि सङ्गमः ।

( २ ) अतः परं न पारयामि स्थातुम्, ततो गमिष्यामि ।

# चतुर्थोऽङ्कः ।

( नेपथ्ये )

( १ ) ओस्सलेध भो अग्गदो ओसलेध ।

( ततः प्रविशति राजा भीमरथोऽमात्यवसुदत्तादिकश्च परिवारः )

**राजा**—अमात्य ! दर्शय मार्गं येन स्वयंवरशोभामालोकयामः ।

**वसुदत्तः**—इत इतो देवः परिक्रामतु ।

**राजा**—अमात्य ! वत्साप्रतिकृतिदर्शनेनापि वयं स्वयंवरं विधातुमीषन्मनसः समभवाम । घोरघोणवचनविरोधिलम्बस्तनीवचनेन पुनः सविशेषमुत्साहिताः ।

**वसुदत्तः**—देव ! लम्बस्तनी किमुक्तवती ?

**राजा**—निषधाधिपतिपत्नी दमयन्ती भविष्यतीत्युक्तवती ।

**वसुदत्तः**—चित्रसेनपत्नीप्रतिपादकेन घोरघोणवचनेन सह सर्वथा विरुध्यते लम्बस्तनीवचः ।

**राजा**—ततोऽस्माभिस्तदेतं वरविप्लवमाशङ्कमानैः स्वयंवरविधिरनुष्ठितः ।

**वसुदत्तः**— देव ! वराधिरोहणक्रुद्धेन दुरात्मना घोरघोणेन किमप्यश्रद्धेयमश्रोतव्यं च प्रतिज्ञातम् ।

**राजा**—( सभयम् ) किं तत् ?

**वसुदत्तः**—यो दमयन्तीं परिणेष्यति, तस्य राज्यभ्रंशम् ( इत्यर्धोक्ते तूष्णीमास्ते )

**राजा**—शान्तं शान्तं प्रतिहतममङ्गलम्, ननु दमयन्तीपतिस्त्रिखण्डभरतपतिरिति मुनयः समादिशन्ति । ततः कथं स तापसापसदो राज्यभ्रंशं करिष्यति ?

**वसुदत्तः**—यदेव ज्ञानचक्षुषः समादिशन्ति तदेवास्तु । ( विलोक्य ) अयं स्वयंवरमण्डपः, इदं सिंहासनमास्यतां देवेन ।

**राजा**—( तथा कृत्वा विलोक्य च ) अमात्य ! समायाताः काशीपतिप्रभृतयः क्षोणिपतयः, परमद्यापि निषधाधिपतिर्नायाति । कोऽत्र भोः ?

---

( १ ) अपसरत भोः ! अग्रतोऽपसरत ।

( प्रविश्य )

**पुरुषः**—आदिशतु देवः ।

**राजा**—अये मङ्गलक ! कुसुमाकरोद्यानान्निषधाधिपतिमाकार्य शचीपतिदिशि विनिवेशिते कार्तस्वरसिंहासने समुपवेशय ।

( 'आदेशः प्रमाणम्' इति ब्रुवाणो मङ्गलको निष्क्रान्तः । ततः प्रविशति मङ्गलकेनादिश्यमानमरणिर्नलः कलहंस-खरमुख-मकरिकाऽऽदिकश्च परिवारः )

**मङ्गलकः**—इत इतो निषधाधिपतिः । इदं सिंहासनमास्यताम् ।

**नलः**—( समुपविश्य स्वगतम् )

आकुञ्चितैर्विकसितैश्चकितैः प्रहृष्टै-
रुत्कण्ठितैः कुटिलितैर्ललितैर्विनीतैः ।
आलोकितैर्मृगदृशो वदनप्रवृत्ति-
वृत्तैर्जितोऽस्मि मुषितोऽस्मि हृतोऽस्मि तुल्यम् ॥ १ ॥

( प्रकाशम् ) कलहंस !

कृतमिषशतं यद् गच्छन्त्या मुहुर्मुहुरीक्षितं
यदपि च सखीशङ्काभीत्या गता न विरागतः ।
तदिदमनिशं स्मारं स्मारं कुशीलववन्मनो
हसति रमते रोदित्युच्चैर्विषीदति सीदति ॥ २ ॥

( विमृश्य ) कीदृशमस्य स्वयंवरस्य निर्वहणं सम्भावयसि ?

**कलहंसः**—पत्रकश्लोकविमर्शनेन नाटकस्येव प्रमदाद्भुतरसशरणं सम्भावयामि निर्वहणम् ।

**नलः**—वयस्य खरमुख ! खरनादितेन राजपुत्रीं प्रतिनिवर्तयता त्वया वयमधमर्णीकृताः । जाने भगवता विरञ्चेन भवानेतदर्थमेव गर्दभवदनः कृतः ।

**विदूषकः**—( सरोषम् ) ( १ ) अदो ज्जेव तए कदण्णुचूडामणिना खरमुहस्स पडिकदं कदं ।

**नलः**—वयस्य ! राजपुत्रीललितमीमांसादुर्ललितचेतोभिरस्माभिर्न किमपि रजनावनुस्मृतम्, तदिदानीं गृहाणेदं ग्रैवेयकम् ।

( १ ) अत एव त्वया कृतज्ञचूडामणिना खरमुखस्य प्रतिकृतं कृतम् ।

**विदूषकः**—( १ ) कुविदो म्हि, न गिन्हिस्सं ।

**नलः**—मकरिके ! वयस्यमनुकूलयास्मासु ।

**मकरिका**—( २ ) अरे गद्दहमुह ! किं भट्टिणमवजाणासि ?

**विदूषकः**—( ३ ) आ दासीए धीए ! मं बंभणमहिक्खिवसि ?

**नलः**—वयस्य ! साम्प्रतमनवसरः क्रोधस्य ।

**विदूषकः**—( ४ ) जइ अणवसरो कोहस्स, ता गिन्हिस्सं पसादं ।

**नलः**—रसभङ्गः कृतस्त्वया, ततो न वयं ग्रैवेयकं प्रतिपादयिष्यामः ।

**मकरिका**—( विहस्य ) ( ५ ) ईदिसस्स ज्जेव संमाणस्स जुग्गो सि ।

**विदूषकः**—( ६ ) भो ! पडिवादेहि आभरणं, न पुणो रुसिस्सं ।

( नलो ग्रैवेयकं समर्पयति )

**मङ्गलकः**—( अग्रतः परिक्रम्य ) देव विदर्भाधिपते ! समायातो निषधाधिपतिः ।

**राजा**—अवशिष्यते कोऽपि नरपतिः ?

**मङ्गलकः**—न कोऽपि ।

**राजा**—कोऽत्र भोः ?

( प्रविश्य )

**कञ्चुकी**—एषोऽस्मि ।

**राजा**—माधवसेन ! वत्सां दमयन्तीं स्वयंवरमण्डपे समानय ।

( 'आदेशः प्रमाणम्' इत्यभिधाय माधवसेनो निष्क्रान्तः । ततः प्रविशति कञ्चुकिना निर्दिश्यमानमार्गा दमयन्ती, गृहीतवरमाला कपिञ्जला च )

**कपिञ्जला**—( ७ ) तदो पुच्छिदा अहं रयणिवुत्तंतं मयरियाए, कहिदो य मए ।

( १ ) कुपितोऽस्मि, न ग्रहीष्यामि ।

( २ ) अरे ! गर्दभमुख ! किं भर्तारमवजानासि ?

( ३ ) आः ! दास्याः पुत्रि ! मां ब्राह्मणमधिक्षिपसि ?

( ४ ) यद्यनवसरः क्रोधस्य, तद् ग्रहीष्ये प्रमादम् ।

( ५ ) ईदृशस्यैव सम्मानस्य योग्योऽसि ।

( ६ ) भोः ! प्रतिपादय आभरणम्, न पुना रुषिष्यामि ।

( ७ ) ततः पृष्टाऽहं रजनीवृत्तान्तं मकरिकया, कथितश्च मया ।

दमयन्ती—( सरोषमिव ) ( १ ) कीस तए अहं लहुईकदा ?

माधवसेनः—इत इतो देवी। देवि ! अयमेष देवो विदर्भाधिपतिः। एते च वरयितारः क्षमाभर्तारः।

कपिञ्जला—( अपवार्य नलं दर्शयन्ती ) ( २ ) एसो उण कुसुमावचयपच्चूहकारी दुव्विसहआधि—वाधिनाडयपत्थावणासुत्तहारो सजणो।

दमयन्ती—( समन्ततोऽवलोक्य, नलं च सविशेषं निर्वर्ण्य स्वगतम् ) ( ३ ) कधं अहल्लेव गोदमस्स सावेण एदस्स दंसणेण जडीकदा मे ऊरुजुयली ! हीमाणहे ! कधं सयंवरमंडवे परिक्कमिस्सं ?

कपिञ्जला—( स्वगतम् ) ( ४ ) अम्मो ! कधं भट्टिणीए नलं पिच्छिउण ऊरुत्थंभो जादो ? भोदु एवं दाव ( प्रकाशम् ) भट्टिणि ! रयणिसंभूददाहजरेण नीसहाइं दे अंगाइं, ता मं अवलंबिय परिक्कमसु।

नलः—( विलोक्य ) मकरिके ! केयं कपिञ्जलादत्तहस्तावलम्बा परिक्रामति ?

मकरिका—( ५ ) णं एसा दमयंती।

नलः—अहो ! कौतूहलं राजपथेऽपि भ्रमः। नन्वियं विष्टपदृष्टिचकोरीचन्द्रिका देवी दमयन्ती। मकरिके !

अधिकमधिवहन्ती गण्डयोः पाण्डिमानं
तलिननलिननालान्यङ्गकैस्तर्जयन्ती।
अलसचरणपातैर्वीक्षितैश्चातिकान्तैः
कथय कथमियं नः साम्प्रतं भात्यपूर्वा ? ॥ ३ ॥

( १ ) कथं त्वयाऽहं लघुकीकृता ?

( २ ) एष पुनः कुसुमावचयप्रत्यूहकारी दुर्विषहाधि—व्याधिनाटकप्रस्तावनासूत्रधारः स्वजनः।

( ३ ) कथमहल्येव गौतमस्य शापेनैतस्य दर्शनेन जडीकृता मे ऊरुयुगली ! हा ! कथं स्वयंवरमण्डपे परिक्रमिष्यामि ?

( ४ ) अहो ! कथं भर्त्र्या नलं दृष्ट्वा ऊरुस्तम्भो जातः ? भवतु, एवं तावत्। भर्त्रि ! रजनीसम्भूतदाहज्वरेण निःसहानि ते अङ्गानि, ततो मामवलम्ब्य परिक्रमस्व।

( ५ ) नन्वेषा दमयन्ती।

मकरिका—( विहस्य ) ( १ ) भट्टा ज्जेव संतावमुप्पाययंतो अपुरव-त्तणे कारणं।

नलः—( सहर्षम् ) अयि ! रजनिवृत्तान्तमवधार्य वदसि ?

मकरिका—( २ ) अध इं।

नलः—किमजनि रजनौ देव्याः ?

मकरिका—( ३ ) जं रहंगघरिणीए।

नलः—कच्चिन्निपधाधिपतिर्भगवता विरञ्चेन सुभगश्रेणिं लम्भितः। ( दम-यन्तीं विलोक्य ) मकरिके !

सान्निध्यात् पितुराननं नृपजनव्यालोककेलीलोन्नतं
मद्वक्त्रेक्षणलालसात् प्रतिमुहुः कोणाङ्ककेलीचलम्।
आरामस्मरणोद्गताद्भुतरमं वेपाँचितीदर्शन–
व्यग्रं नव्यसभाप्रवेशचकितं चक्षुः कुरङ्गीदृशः ॥ ४ ॥

राजा—अये माधवसेन ! प्रत्येकमवनीभुजां नय-विनय-क्रम-विक्रमानुत्कीर्तय पुरो वत्सायाः।

माधवसेनः—( पुरो भूत्वा दमयन्तीं प्रति )

स्मेराक्षि ! क्षितिचक्रविश्रुतवलः काशीक्षितीशो बलः[१]
सोऽयं स्कन्धतटेऽस्य मुञ्च विकचन्मल्लीप्रसूनस्रजम्।
उच्छालस्पृहयालुशीकरभरव्यासङ्गरङ्गन्नगे
गाङ्गे रोधसि सस्पृहा ग्लपयितुं चेद् ग्रीष्ममध्यन्दिनम् ॥ ५ ॥

दमयन्ती—( ४ ) अज्ज ! परवंचणवसणिणो कासिवासिणो सुचंति।

माधवसेनः—न मेऽस्मिन् मनोरतिरिति व्यक्तमुच्यताम्।

( परिक्रम्य )

अयमवनिपतीन्दुर्भूपतिः कुङ्कणानां
कलय वलयधाम्ना पाणिना पाणिमस्य।

( १ ) भर्तैव सन्तापमुत्पादयन् अपूर्वत्वे कारणम्।

( २ ) अथ किम्।

( ३ ) यद् रथाङ्गगृहिण्याः।

( ४ ) आर्य ! परवञ्चनव्यसनिनः काशीवासिनः श्रूयन्ते।

१ क. प्लव०

अधिजलधिगतानां गोत्रशत्रुर्मृगाक्षि !
क्षपयति नहि पक्षान् क्ष्माभृतां शङ्कितोऽस्मात् ॥ ६ ॥

दमयन्ती—(१) अणिमित्तरोसिरो एस, ता न पारेमि पए पए अणुकूलिदुं।

माधवसेनः—कुन्ददति ! वयसैव लघीयसी, संसारोपनिषद्वैदुष्येण गरीयसी खल्वसि।

अकाण्डकोपिनो भर्तुरन्यासक्तेश्च योषितः।
प्रसत्तिश्चेतसः कर्तुं ब्रह्मणापि न शक्यते ॥ ७ ॥

( सर्वेऽग्रतः परिक्रामन्ति )

काश्मीरेश्वर एष शेषवनितासङ्गीतकीर्तिद्विषत्-
कान्तावक्त्रविचित्रपत्रमकरीहव्यैकधूमध्वजः।
एतं कुन्ददति ! त्वमावह वरं यद्यस्ति कौतूहलं
केदारेषु विकासिकुङ्कुमरजःपिङ्गेषु सङ्क्रीडितुम् ॥ ८ ॥

दमयन्ती—( २ ) अज्ज माधवसेण ! तुसारसंभारपणयभीरुयं मे सरीरयं न किं तुमं जाणासि ?

माधवसेनः—तर्हि पुरो व्रजामि। ( परिक्रम्य ) कलहंसगमने !

कौशाम्बीपतिरयमुन्नतांसपीठः
शौण्डीर्यावसथममुं वरं वृणीष्व।
यत्तेजोऽनलमसहिष्णुरुत्पतिष्णुः
क्ष्मापालो वनमभिभूतवान् न कस्कः ? ॥ ९ ॥

दमयन्ती—( ३ ) कपिंजले ! अदिरमणीया तुमए वरमाला विणिम्मिदा।

माधवसेनः—अप्रतिवचनमेवास्य भूपतेः प्रत्यासः।

नलः—( कुसुमचापसन्तापमभिनीय स्वगतम् )

---

( १ ) अनिमित्तरोषण एष, तन्न पारयामि पदे पदेऽनुकूलयितुम्।

( २ ) आर्य माधवसेन ! तुषारसम्भारप्रणयभीरुकं मे शरीरं न किं त्वं जानासि ?

( ३ ) कपिञ्जले ! अतिरमणीया त्वया वरमाला विनिर्मिता।

यस्यां मृगीदृशिदृशोरमृतच्छटायां
देवः स्मरोऽपि नियतं विततामिलाषः।
एतत्समागममहोत्सवबद्धतृष्ण-
माहन्ति मामपरथा विशिखैः कथं सः? ॥ १० ॥

**माधवसेनः**—( परिक्रम्य )

स एष सुभगाग्रणीः पतिरवन्तिभूमेः कला-
कलापकुलकेतनं यदरिवामनेत्राजनैः।
वसद्भिरधिपर्वतं किमपि पर्वतीयाधिप-
स्त्रियो नृपतिनायिकाललितनाटकं शिक्षिताः ॥ ११ ॥

तदकोशसहस्रपत्रपत्रलाक्षि ! पवित्रय निजेन पाणिना पाणिमस्य यदि सिप्रा-स्रोतसि स्नानाय स्पृहयसि।

**दमयन्ती**—( १ ) माधवसेण ! विवाहमंगलसंगलिदभूरितूररवपडिरव-जणिदजागरणभिंभलाइं मे अंगाइं, न तरामि पुणो पुणो भंतिदुं।

**माधवसेनः**—( सभयमात्मगतम् ) कथमवन्तीपतिविद्वेषेण सरोषमाभाषते। भवतु, नृपान्तरमुत्कीर्तयामि। ( प्रकाशम् ) कलकण्ठीकण्ठि ! न्यायैकधनमेतमनुमन्य-स्व पतिं कलिङ्गाधिपतिम्। पश्य पश्य—

यथा यथा प्रतापाग्निर्ज्वलत्यस्य महौजसः।
चित्रं वर्णाश्रमारामाः स्निग्धच्छायास्तथा तथा ॥ १२ ॥

**दमयन्ती**—( विलोक्य ) ( २ ) तादसमाणवयपरिणामस्स नमो एतस्स।

**माधवसेनः**—( स्वगतम् ) वार्द्धककलङ्कपङ्किलः सत्यमनुपासनीय एवाय-मभिनवयौवनानाम्। भवतु ( पुनः परिक्रामति। प्रकाशम् ) मृगाङ्कमुखि !

दर्पाध्मातविरोधिवीरकुरलीदोःकाण्डकण्डूक्रम—
च्छेदच्छेकपराक्रमं पतिममुं मन्यस्व गौडेश्वरम्।

---

( १ ) माधवसेन ! विवाहमङ्गलसङ्कलितभूरितूर्यरवप्रतिरवजातजागरणविह्वलानि मेऽङ्गानि, न शक्नोमि पुनः पुनर्मन्त्रयितुम्।

( २ ) तातसमानवयःपरिणामाय नम एतस्मै

भ्रश्यद्विन्दुतरङ्गभङ्गिपटलैर्यद्वाहिनीवारण—
श्रेणीदानजलैर्बिभर्ति जगती कस्तूरिकामण्डनम् ॥ १३ ॥

दमयन्ती—( १ ) अम्मो ! ईदिसं पि कसिणभीसणं माणुसरूवं भोदि ! अज्ज ! तुरिदमग्गदो वच, वेघदि मे हिदयं ।

( [1]माधवसेनः स्मित्वा परिक्रामति )

नलः—( दमयन्तीमवलोक्य कलहंसं प्रति ) पश्य पश्य कौतूहलम् ।

चापल्यं दृशि शाश्वतं, कुटिलतां चूर्णालकेषु स्थिरा—
मौद्धत्यं कुचयोरनन्यशरणं मध्ये परां तुच्छताम् ।
बिभ्राणाऽपि विदर्भराजतनया प्रीत्यै सतां चेतसः

कलहंसः—देव ! किमदः कौतूहलम् ? यतः—

दोषा अप्यतिशेरते क्वचिदपि स्थाने प्ररूढा गुणान् ॥ १४ ॥

माधवसेनः—आः ! दुर्विदग्धहृदये !

रेवासीकरवारिवेपथुवपुर्माहिष्मतीभूपतिः
सोऽयं श्रीवनिताविलासवसतेरस्याङ्कशय्यां गता ।
शर्म्मोल्लाघनघर्मघस्मरमरुन्मैत्रीनिपीतक्लम—
स्वेदाम्भःकणिकासपे ! क्षिप शरच्चन्द्रातपास्ताः क्षपाः ॥ १५ ॥

दमयन्ती—( स्मृतिमभिनीय ) ( २ ) अंबहे ! एस अंबाए भादुणो तणुओ वक्कसेणो ।

माधवसेनः—( सलज्जं परिक्रम्य ) चन्द्रमुखि ! कालिन्दीसीकरासारसम्पर्कसततझञ्झानिलीभूतवातपरिरम्भासम्भावितग्रीष्मोष्माणं विजयवर्माणं मथुराधिपतिं पतिमेतमनुमन्यस्व, स्वैरं विहर्तुमुत्कण्ठसे यदि वृन्दावनपावनासु गोवर्द्धनाधित्यकासु ।

यात्रायां किल यस्य सिन्धुरघटाप्रायैःप्रसर्पत्क्रम—
मूर्च्छोलावनिलोलमूलतरले चामीकरक्ष्माभृति ।

( १ ) अहो ! ईदृशमपि कृष्णभीषणं मनुष्यरूपं भवति । आर्य ! त्वरितमग्रतो व्रज, वेपते मे हृदयम् । ( २ ) अहो ! एषोऽअम्बाया भ्रातुस्तनुजो वक्रसेनः ।

[1] क० प्राप्तः प्र०

घूर्णन्तीषु विशृङ्खलं प्रतिकलं दोलासु दैत्यद्विषां
कन्याः कुञ्चितपाणयो विदधते प्रेङ्खाविनोदोत्सवम् ॥ १६ ॥

**दमयन्ती**—( १ ) अज्ज माधवसेण ! णाहमारामभूरुहविहारकोदूहलिणी ।

**माधवसेनः**—( स्वगतम् ) अयमपि न मे मनः प्रीणयतीति निवेदितम् । भवतु । अग्रतः परिक्रमामि । ( परिक्रम्य प्रकाशम् ) पक्ष्मलाक्षि !

त्रैलोक्योदरवर्त्तिकीर्तिकदलीकाण्डप्रकाण्डप्रथा- .
पाथोदं दयितं विधेहि तममुं काञ्चीपतिं भूपतिम् ।
वाहिन्या प्रथितप्रतापघनया यस्मिन् समाक्रामति
क्रान्तः क्षोणिभृतः कुतो न निरगात् सङ्ग्रामगर्वोरगः ? ॥ १७ ॥

**दमयन्ती**—( २ ) हीमाणहे ! परिस्संतम्हि एदिणा सयंवरमंडवभूमिविहरणेण, किच्चिरं अज्ज वि अज्जो माधवसेणो जंपिस्सादि ?

**वसुदत्तः**—( राजानं प्रति ) देव ! पश्य—

ताराविलासरुचिरं नयनाभिनन्दि
नव्यं नरेन्द्रदुहितुर्मुखमिन्दुबिम्बम् ।
यस्याभिषङ्गरहिताः कटकैः सहैव
विच्छायतां क्षितिभृतः सहसा व्रजन्ति ॥ १८ ॥

( प्रविश्य सम्भ्रान्तः )

**पुरुषः**—देव विदर्भाधिपते ! लग्नघटिका वर्तत इति मौहूर्तिका विज्ञापयन्ति ।

**राजा**—( ससम्भ्रमम् ) अये माधवसेन ! संवृणु वाचालतां विलम्बमसहिष्णुर्लग्नसमयः । कपिञ्जले ! केयमरोचकिता वत्सायाः ?

**माधवसेनः**—( सभयमग्रतः परिक्रम्य ) कुड्मलाग्रदति देवि !

प्रकर्षपदमन्तिमं द्रुहिणरूपशिल्पश्रियः
स एष निषधापतिः सुभगकुञ्जरग्रामणीः ।
विलोक्य किल यं जगन्नयनकैरवेन्दुं चिरा-
दमंस्त परिकल्पितां मदनदाहवार्तां जनः ॥ १९ ॥

( १ ) आर्य माधवसेन ! नाहमारामभूरुहविहारकौतूहलिनी ।

( २ ) हा ! परिश्रान्तास्मि एतेन स्वयंवरमण्डपभूमिविहरणेन । कियच्चिरमद्याप्यार्यो माधवसेनो जल्पिष्यति ?

**दमयन्ती**—( साश्चर्यमात्मगतम् ) ( १ ) अहो ! मणोहरदा आगिदीए ! अहह चंगिमा अंगसंनिवेसाणं ! कटरि सूहवत्तणं ! कटरि विलासवियड्ढिमा !

**राजा**—( विलोक्य ) कथमद्यापि वत्सा विलम्बते ? ( पुनरुच्चैःस्वरम् ) वत्से !

स्थिरं कृत्वा चेतः सुदति ! वृणु रामैकशरणं
तमेतं भूपालं य इह ननु नव्यः किल नलः।
यदेतस्याक्रान्ताः क्षणमपि करेणाचलघने
वने मज्जन्त्याशु स्फुटकटकवन्तः क्षितिभृतः ॥ २० ॥

**नलः**—( सर्वाङ्गीणमालोक्यात्मगतम् )

नयननलिनपेयं श्वेतिमानं वहन्ती
श्रियमिह वदनेन्दौ दन्तपत्रे विदन्ती।
यदयमथ दधानः कालिमानं विधत्ते
कुटिलचिकुरभारस्तत् तु कौतूहलं नः ॥ २१ ॥

**दमयन्ती**—( सप्रमोदमात्मगतम् ) ( २ ) हियय ! मुंच कापेयं। भोदु दमयंतीयाए सहलं मणुयलोयावयरणं।

**नलः**—( सभयमात्मगतम् ) कथमियं चिरयति ? किं विस्मृतवती स्वयमारामदत्तं सङ्केतम् ? उताहो स भगवान् विधिरकाण्डे निषधाधिपतौ कोपमुपगतवान्।

**वसुदत्तः**—( उच्चैःस्वरम् )

उन्मीलद्दलशतपत्रपत्रलाक्षि !
क्ष्मापालं नलमधिगम्य कामरूपम्।
सप्रीतिस्मरतनुगोचराणि तूर्णं
लोकानां सफलय नेत्रकौतुकानि ॥ २२ ॥

**कपिञ्जला**—( ३ ) देवि ! किं अज्ज वि विलंबीयदि ?

**दमयन्ती**—( स्मित्वा ) ( ४ ) कपिञ्जले ! जं तुमं भणसि तं करेमि। ( वरमालामादाय नलस्य कण्ठे विन्यस्यति )

---

( १ ) अहो ! मनोहरताऽऽकृत्याः ! अहह ! चङ्गताऽङ्गसंनिवेशानाम् ! कटरि सुभगत्वम् ! कटरि विलासवैदग्ध्यम् !

( २ ) हृदय ! मुञ्च कापेयम्। भवतु दमयन्त्याः सफलं मनुजलोकावतरणम्।

( ३ ) देवि ! किमद्यापि विलम्ब्यते ? (४) कपिञ्जले ! यत् त्वं भणसि, तत् करोमि।

सर्वे—( सहर्षमुच्चैःस्वरम् ) अहो ! सुवृत्तं सुवृत्तम् ।

नलः—( सहर्षरोमाञ्चमात्मगतम् )

अद्याभूद् भगवान् विरञ्चिरुचितव्यासङ्गनिष्णातधी-
देवस्याद्य मनोभवस्य फलवान् कोदण्डयोग्यक्रमः ।
चन्द्रोद्यानवसन्तदक्षिणमरुन्माल्यादिकस्याभवत्
कामोत्सेधविधायिनोऽद्य सफलो भूगोलचारश्चिरात् ॥ २३ ॥

( प्रकाशं जनान्तिकम् ) कलहंस ! मकरिके ! फलितः स एष वां प्रयासः ।

कलहंसः—देव ! नावयोः प्रयासः फलितः, किन्तु देवस्य स्वप्नः ।

नलः—समभूदिदानीं स्वप्नार्थप्रत्याशा ।

( नेपथ्ये )

हंहो राजलोकाः ! प्रवर्त्यतां कौतुकविधिः, प्रतिरुध्यतां कोलाहलः, अवधीयतां झल्लरीझात्कारः ।

राजा—( ससम्भ्रमम् ) माधवसेन ! नीयतां सवरा वत्सा देवी ।

( नलदमयन्त्यौ सपरिकरे माधवसेनेन समं निष्क्रान्ते )

( नेपथ्ये )

बन्दी—

विन्यस्याभिनवोदये श्रियमयं राज्ञि प्रतापोज्झितो
द्यूतस्य व्यसनीव धूसरकरः सन्त्रुस्यदाशास्थितिः ।
निद्रायद्दललोचनां कमलिनीं सन्त्यज्य मध्येवनं
क्रामत्यम्बरखण्डमात्रविभवो देशान्तरं गोपतिः ॥ २४ ॥

वसुदत्तः—( विमृश्य सविषादम् ) देव ! भ्रष्टराज्यस्य स्ववधूं परित्यज्य वरस्य देशान्तरगमनमावेदयति सन्ध्यासमयवर्णनव्याजेन मागधः ।

राजा—शान्तं शान्तं स्वस्ति स्तात् । प्रतिहतजगत्त्रयदुरिततान्तिः सकलदेवताधिचक्रवर्ती देवः श्रीशान्तिः शिवतातिरस्तु वधूवरस्य ।

अमात्यः—कृतमनिष्टशङ्कया । एहि विवाहकृत्यानि चिन्तयितुं[1] व्रजामः ।

( इति निष्क्रान्ताः सर्वे )

॥ चतुर्थोऽङ्कः ॥

१ ख. ग. चिन्तया ।

# पञ्चमोऽङ्कः ।



( ततः प्रविशति कलहंसः )

कलहंसः—( सविषादम्[1] ) अहो ! विकटस्य संसारनाटकस्य परस्परविरुद्ध-रससमावेशवैरस्यम् ! शृङ्गाराद्भुतरसनिस्यन्दसुन्दरः क्व नाम स स्वयंवरविवाहमहोत्सवाडम्बरः, क्व चैष परमकरुणरसप्रावीण्यप्रणयपिच्छिलो दुरोदरप्रवर्तितो दमयन्तीमात्रपरिकरस्य देवस्य निषधाधिपतेः प्रवासवैशसोपप्लवः ! अहह ! किमिदमनार्योचितं कर्म समाचरितमिन्दुकुलकृतावतारेणापि देवेन ! अपि खलु पामरप्रकृतयोऽपि दुरोदरकर्मणो दुर्विपाकमाकलयन्ति, किं पुनः सर्वकर्मीणबुद्धिर्देवो निषधाधिपतिः । यदि वा--

कृत्याकृत्यविदोऽपि धर्ममनसोऽप्यन्यायतो बिभ्यतो-
ऽप्यश्लाघ्यं पुरुषस्य दैववशतस्तत् किञ्चिदुज्जृम्भते ।
माहात्म्यं विभवः कला गुणगणः कीर्तिः कुलं विक्रमः
सर्वाण्येकपदेऽपि येन परितो भ्रश्यन्ति मूलादपि ॥ १ ॥

न चैतदनात्मनीनमेव कर्म समाचरितं देवेन, किमुतासर्वजनीनम् । न नाम सैंहिकेयोपरागे सवितैव केवलं क्लाम्यति, किन्तु तदधीनाशेषव्यवहारविशेषमखिलमपि काश्यपीवलयम् । किं नु पुरोहितप्रभृतिपौरलोकः शोकाकुलो द्यूतकर्मनिवारणाय प्रवृत्तः सकलराज्यदमयन्तीपणेन दीव्यता देवेन समावधीरितस्तदपि न सतां चेतश्चमत्कारकारि । यतः--

तावन्मतिः स्फुरति नीतिपथाध्वनीना
तावत् परोक्तमपि पथ्यतया विभाति ।
यावत् पुराकृतमकर्म न सर्वपर्व-
प्रत्यूहकारि परिपाकमुपैति जन्तोः ॥ २ ॥

अपि च--

स्फुरन्त्युपायाः शान्त्यर्थमनुकूले विधातरि ।
प्रतिकूले पुनर्यान्ति तेऽप्युपाया अपायताम् ॥ ३ ॥

---

१ क. यतनि०

सर्वथा विधिरेवात्र कर्मण्यलङ्कर्मीणतामगमत् । अथवा दुरोदरचातुरीविनिषधाधिपतिं विजेतुं कथमलम्भूष्णुरेप कूबरः ? खलु कृत्वाऽतीतशोचनम् । क एकः किल विधिविलसितविपाको मीमांस्यते । श्रुतं च मया यथा खरमुख-मकरिके अपि पुरीपरिसरारामवर्तिनो दमयन्तीसचिवस्य देवस्याग्तिकमधितिष्ठतः । तदहमपि गच्छामि । ( इति परिक्रामति । विलोक्य ) किमयं देवः क्षोणीपत्यपथ्यपथिकनेपथ्यपङ्क्तिलस्तिलकतरुतले निविष्टस्तिष्ठति ? ( सास्त्रम् ) कथमहमेतस्य दुरवस्थापातिनः स्वामिनः स्वमास्यं दर्शयामि ? तदित एव स्थानात् प्रतिनिवर्ते । यदि वा प्रवसन्तं स्वामिनमालप्य पावकप्रवेशेन निरन्तरभक्तिसमुचितमाचरामि ।

( ततः प्रविशति राजा, दमयन्त्यादिकश्च परिवारः )

**राजा**—( सावष्टम्भम् ) देवि ! मा रोदीः प्रशस्तलक्षणा भवती । न खलु ते पतिरभूत्वा भूपतिर्विश्राम्यति । व्यसनोपपातश्चायमनागतायाः सम्पदः पदम् ।

उभयाभिमुख्यभाजां सम्पत्त्यर्थं विपत्तयः पुंसाम् ।
ज्वलितानले प्रपातः कनकस्य हि तेजसो वृद्ध्यै ॥ ४ ॥

( दमयन्ती मन्दं मन्दं रोदिति )

**विदूषकः**—( विलोक्य ) ( १ ) भट्टा ! कलहंसो पणमदि ।

**राजा**—( सखेदम् ) खरमुख ! भर्तेति पदमन्यत्र सङ्क्रान्तम्, तदिदानीं नलेत्येवमामन्त्रणपदमर्हामि । प्रणमतीत्यप्यवस्थाविरुद्धमनुच्चारणीयम् । कलहंसः समायातोऽस्मीत्येवमेव रमणीयम् ।

( कलहंसः प्रणम्य सास्त्रमधोमुखस्तिष्ठति )

**राजा**—( कलहंसं प्रति )

मा विषीद कृतं बाष्पैः फलं मर्षय कर्मणाम् ।
सत्यं विषाद-शोकाभ्यां न दैवं परिवर्तते ॥ ५ ॥

**कलहंसः**—( बाष्पमवधूय ) देव ! सुमहान् मानभङ्गः कृतः कूबरेण ।

**राजा**—( साक्षेपम् ) न कूबरेण कृतः किन्तु वेधसा ।

अहंयूनामहङ्कारं वारिदानां समुन्नतिम् ।
विना विधिमृते वातं हन्तुं को नाम कर्मठः ? ॥ ६ ॥

( १ ) भर्तः ! कलहंसः प्रणमति ।

१ क. सावक्षेपं ।

**कलहंसः**—( प्रणम्य ) अनुयानाय मामनुजानातु देवो विदूषकमपि।

**राजा**—देवीमपि मुमुक्षुरहं परमियमबलाऽऽग्रहेण मामनुगच्छति। अपि च सर्वस्वपणेन मां कूबरो जितवान्। ततः पथि पथिकवृत्त्यैव गन्तुमुचितम्। तदनुजानीतास्मान् देशान्तरगमनाय। श्लथयत स्नेहबन्धम्। कुरुत निर्दयं हृदयम्। न क्षमामहे राज्यभ्रंशधूसरं परिचितपौराणामास्यं दर्शयितुम्। व्रजामः कामप्येकां दिशम्। ( अग्रतः कृत्वा ) देवि! दुर्विषहवातशीतातपक्लेशकारीणि प्रान्तराणि। राज्यभ्रंशेन विगतपरिच्छदवाहना वयम्। न शक्ष्यति भवती क्रमितुमशिक्षितपादचारा करालव्यालशैलसङ्कटासु वनभूमिषु। तद् विधेहि मे वचनमवलम्बस्व दीर्घदर्शितामिहैव कूबरान्तिके तिष्ठ पितृगृहं वा व्रज। ( सर्वे तारस्वरं रुदन्ति ) किमेतेन प्राकृतप्रकृतिसब्रह्मचारिणा चेष्टितेन? ननु धैर्यमवलम्ब्य समयोचितमाचरत।

**दमयन्ती**—( १ ) अज्जउत्त! अहं इध ज्जेव चिट्ठिस्सं। पाणा उण अज्जउत्तेण समं आगमिस्संति।

**कलहंसः**—( प्रणम्य ) अनुव्रजतु देवी देवम्।

**राजा**—अनुव्रजतु नाम परं परमक्लेशमनुभविष्याति।

**दमयन्ती**—( २ ) जं भोदि तं भोदु, अहं दाव आगमिस्सं।

**राजा**—कलहंस! मर्षयितव्यं यदस्माभिः प्राभवान्धैः किमप्यपराद्धम्। वयस्य खरमुख! सर्वदा क्रीडासचिवोऽसि नः। ततस्त्वयाऽस्माकमुपहासादिकं सोढव्यम्। मकरिके! त्वदीयस्य दमयन्तीघटनाप्रयासस्य तदीदृशमवसानमभूत्।

**दमयन्ती**—( ३ ) पियसहि मयरिए! कुंडिणं गडुय अंबाए तादस्स य एस पवासवुत्तंतो विन्नवेयव्वो।

( १ ) आर्यपुत्र! अहमिहैव स्थास्यामि। प्राणाः पुनरार्यपुत्रेण सममागमिष्यन्ति।

( २ ) यद् भवति तद् भवतु, अहं तावदागमिष्यामि।

( ३ ) प्रियसखि मकरिके! कुण्डिनं गत्वाऽम्बायाः तातस्य चैष प्रवासवृत्तान्तो विज्ञपयितव्यः।

**मकरिका**—( सास्रम् ) ( १ ) भट्टिणि ! न सक्केमि अत्तणो मुहं दंसिदुं, ता कुंडिणं न गमिस्सं ।

**दमयन्ती**—( २ ) अज्ज खरमुह ! सहि मयरिए ! अहं तुज्झेहिं सुमरिदव्वा ( कलहंसं प्रति ) महाभाय ! अणुजाणाहि मं वणयरिं भविदुं ।

( सर्वे मन्दं रुदन्ति )

**राजा**—देवि ! अतिकालो भवति । प्रयतस्व देशान्तरगमनाय ।

**दमयन्ती**—( सरभसमुत्थाय ) ( ३ ) एसम्हि पगुणीभूदा ।

**राजा**—( कलहंसादीन् प्रति ) अनुजानीत मां सुकृतं दुष्कृतं वाऽनुभवितुम् ।

( सर्वे सास्रं प्रणम्य निष्क्रान्ताः )

देवि[1] ! कमध्वानमनुतिष्ठामि ?

**दमयन्ती**—( ४ ) विदब्भाणुजाइणं ।

**राजा**—इत इतो देवी ।

( उभौ परिक्रामतः )

**दमयन्ती**—( सास्रं विचिन्त्य ) ( ५ ) अज्जउत्त ! पुव्वचिंतिदं [2]पिच्छ कहं सव्वं पि अन्नहा जायं !

**राजा**—देवि !

अर्वाग्दृष्टितया लोको यथेच्छं वाञ्छति प्रियम् ।
भाग्यापेक्षी विधिर्दत्ते तेन चिन्तितमन्यथा ॥ ७ ॥

( १ ) भर्त्रि ! न शक्नोम्यात्मनो मुखं दर्शयितुम्, तत् कुण्डिनं न गमिष्यामि।

( २ ) आर्य खरमुख ! सखि मकरिके ! अहं युष्माभिः स्मर्तव्या । महाभाग ! अनुजानीहि मां वनचरीं भवितुम् ।

( ३ ) एषाऽस्मि प्रगुणीभूता ।

( ४ ) विदर्भानुयायिनम् ।

( ५ ) आर्यपुत्र ! पूर्वचिन्तितं पश्य कथं सर्वमप्यन्यथा जातम् !

१ क. कम० । २ ख. ग. पिच्छमहं

अपि च देवि ! मा स्म विषीद सर्वमपि शुभोदर्कं भविष्यति ।

अस्तमयाति पुनरुदयाति पुनरस्तमुपैति पुनरुदेत्यर्कः ।
विपदोऽपि सम्पदोऽपि च सततं न स्थास्नवः प्रायः ॥ ८ ॥

दमयन्ती—( परिक्रम्य सखेदम् ) (१) अज्जउत्त ! परिस्संतम्हि ता खणं वीसमिस्सं ।

( राजा सबाष्पं स्वेदाम्भः प्रमृज्य सिचयाञ्चलेन वीजयति )

( निःश्वस्य ) (२) अज्जउत्त ! कित्तियं अज्ज गंतव्वं ?

राजा—यावद् देवि ! समाक्रमितुमलम् ।

( दमयन्ती सखेदमुत्थाय परिक्रामति )

( स्वगतम् ) विनोदयाम्यस्याश्चेतः कान्ताररामणीयकोपवर्णनेन येनेयं[1] चरण-चङ्क्रमणखेदं न वेदयति । ( प्रकाशम् ) देवि ! पश्य पश्य—

एते निर्झरझात्कृतैस्तुमुलितप्रस्थोदराः क्ष्माधराः
किञ्चैते फलपुष्पपल्लवभरैर्ध्वस्तातपाः पादपाः ।
चक्रोऽप्येष वधूमुखार्द्धदलितैर्वृत्तिं विधत्ते बिसैः
कान्तां[2] मन्द्ररुतस्तथैष परितः पारापतो नृत्यति ॥ ९ ॥

दमयन्ती—(३) अज्जउत्त ! सुहावत्थाणमेदे कोदूहलकारिणो, दुहाव[3]-त्थाणं उण विसेसदो संतावकारिणो ।

राजा—सत्यमाह देवी ।

सुस्थे हृदि सुधासिक्तं दुःस्थे विषमयं जगत् ।
वस्तु रम्यमरम्यं वा मनःसङ्कल्पतस्ततः ॥ १० ॥

(१) आर्यपुत्र ! परिश्रान्तास्मि ततः क्षणं विश्रमिष्यामि ।

(२) आर्यपुत्र ! कियदद्य गन्तव्यम् ?

(३) आर्यपुत्र ! सुखावस्थानामेते कौतूहलकारिणः, दुःखावस्थानां पुनर्विशेषतः सन्तापकारिणः ।

१ ख. ग. यतोयं । २ क. कांतामंतरुत० । ३ ख. ग. दुहायत्थाणं ।

**दमयन्ती**—( १ ) अज्जउत्त ! परिस्समेण तिसिदम्हि ।

**राजा**—देवि ! उदन्या त्वां बाधते । कोऽत्र भोः ? अये ! सुरभिशीतल-जलकरकमुपनयत ( अवलोक्य ) कथं न कोऽप्यग्रतः पार्श्वतोऽपि न कश्चित् !

**दमयन्ती**—( सास्रम् ) ( २ ) अज्जउत्त ! किं ण्णेदं !

**राजा**—( सलज्जम् ) देवि ! पूर्वसंस्कारो मां विप्लवयति ।

( दमयन्ती मन्दं मन्दं रोदिति )

देवि ! अहमिदानीं ते पतिश्च पदातिश्च । तद् यावत् कुतोऽपि शीतमम्भः समानयामि तावत् तिलकतरुतले तिष्ठ । ( दमयन्ती तथा करोति )

( परिक्रम्य सखेदाश्चर्यम् )

क्व तद् भ्रूविक्षेपक्षिपितनृपतिक्ष्मापतिपदं
क्व चावस्था सेयं मृगमिथुनलीलायितवती !
न यो वाचः पात्रं भवति न दृशोर्नापि मनस-
स्तमप्यर्थं पुंसां हतविधिरकाण्डे घटयति ॥ ११ ॥

भवतु, विलोकयामि क्वचिदपि पयः । ( विलोक्य ससम्भ्रमम् ) कथं तापसाश्रम इव ! ( सम्यगवलोक्य ) कथं तापसः सदृशस्तस्य लम्बोदरनाम्नः कापालिनः । यदि वा नासौ सः । अयं खलु कुब्जः खञ्जश्च ।

( ततः प्रविशति तापसः )

**तापसः**—निर्विण्णोऽस्मि मार्गविलोकनेन । परमद्यापि न स दुरात्मा समायाति । अवश्यानुष्ठेयश्च गुरोरादेशः । तदितः सरःसेतौ स्थित्वा प्रतिपालयामि । ( साशङ्कम् ) ध्रुवमसौ प्रागुपलक्षयेत् । भवतु, वेषान्तरेण सञ्चरे । ( विलोक्य ) कथं प्राप्तः पापीयानर्थं सा दुर्विनीता क्व ? । भवतु पुरो ज्ञास्यामि । ( अभिमुखमुपसृत्य ) स्वागतमतिथये ।

( १ ) आर्यपुत्र ! परिश्रमेण तृषिताऽस्मि

( २ ) आर्यपुत्र ! किं न्वेतत् !

१ क. वां । २ ख. ग. कपा० । ३ क. अथवा ।

राजा—नमो मुनये ।

तापसः—भद्राणि पश्य । ( अपवार्य विपरीतलक्षणया ) महाभाग ! वपुर्लक्षणविसंवादिनी ते दशा । तत् कथय कोऽसि ? कथं दुःस्थावस्थः ?

राजा—( सव्रीडम् ) मुने ! भूपतिचरोऽस्मि ।

तापसः—( सादरमिव ) तर्हि सुतरामतिथयः स्थ । तदावेदय किमातिथेयमनुतिष्ठामि ?

राजा—बहुदृश्वानस्तपस्विनस्तत् कथयत विदर्भपथाभिज्ञानानि । एतदेव नः साम्प्रतमातिथेयम् ।

तापसः—किं तत्र वः ?

राजा—श्वशुरकुलं तत्र नः ।

तापसः—तत्र वः सधर्मचारिणी ?

राजा—अत्र नः सधर्मचारिणी ।

तापसः—( सविचिकित्समिव ) स्त्रीसङ्गनिगडितो भवान् नार्हः कामचारस्य । अपि च राज्यभ्रंशः स्त्रीसङ्गश्चेति महती व्यसनपरम्परा ।

राजा—( स्वगतम् ) सत्यमाह तापसः । भुजमात्रपरिच्छदैर्यत्रैव तत्रैव यथैव तथैव स्वैरमास्यते । स्त्रीवद्धानां कुतः कामचारः ?

तापसः—अनुचितं गृहस्थकृत्यचिन्तनं तपस्विनः । तथापि साप्तपदीनसौहार्दोप[1]हृतहृदयो महाभागं किमप्यनुशा[2]स्मि ।

राजा—अनुगृह्णातु महात्मा ।

तापसः—भ्रष्टराज्यस्य भवतः श्वशुरकुलगमनमपत्रपावहं मे त्रपाकारि प्रतिभाति । त्वमप्यधिमनसमालोचय यद्ययमर्थः[3] समर्थः प्रदर्शयितुमौन्नितीम् ।

राजा—( स्वगतम् ) इदमप्यस्य वचनं तथ्यं पथ्यं च । तदानीं स्वयंवरे तथा चमूचक्रेण गत्वा पुनरिदानीं दमयन्तीमात्रपरिच्छदः कुण्डिनं प्रविशंस्तत्रत्यपौरजनानामपि हास्यपात्रं भविष्यामि । तदियमेवैका देवी ज्ञातविदर्भपथाभिज्ञाना कुण्डिनमुपसर्पतु । ( प्रकाशम् ) भगवन् ! सौहृदसदृशमनुशिष्टवानसि ।

१ ख. ग. ०पद्रुत० । २ क. ०शासितास्मि । ३ ख. ग. ०मर्थः प्रवहितु० ।

**तापसः**—( सहर्षमात्मगतम् ) अनुष्ठितस्तावदेको गुरोरादेशः । परमितो द्वितीयमनुतिष्ठामि । ( ऊर्ध्वमवलोक्य प्रकाशं सभयम् ) कथं ललाटन्तपस्तपनः ? अतो वर्तते सन्ध्याविधिः । महाभाग ! अनुजानीहि मां मध्याह्नसन्ध्यासेवनाय । अयं चोत्तरेण पर्वतमकुटिलः कुण्डिनस्य पन्थाः ( इत्यभिधाय निष्क्रान्तः )

**राजा**—अस्मात् सरसः कमलदलपुटकैः सलिलमाहरामि, स्वयं च पिबामि ( सखेदम् ) धिग् मां व्यसनोपपातविस्मृतौचित्याचरणम् । अनुपशान्तपिपासायां देव्यां कथमहं पयस्यामि ? भवतु, जलमादाय तत्र गच्छामि । ( तथा कृत्वा परिक्रम्य ) कथमियं मयाऽपहातव्या । आः ! ज्ञातम्, निद्रायितां सन्त्यज्य व्रजामि । ( विलोक्य ) इयं देवी, देवि ! इदं वारि उपस्पृशतु देवी । ( दमयन्ती उपस्पृशति ) देवि ! अयं ते विदर्भेषु व्रजन्त्याः ( पुनः सशङ्कम् ) अयं विदर्भेषु गच्छतामध्वनीनामकुटिलः पन्थाः ।

**दमयन्ती**—( सभयमात्मगतम् ) ( १ ) हा ! हदम्हि मंदभाइणी । किं मं परिच्चइदुकामो अज्जउत्तो, जं एवं जंपेदि ? अहवा पडिहदममंगलं । एयं खु पिवासाखिन्नकंठस्स अज्जउत्तस्स वयणखलिदं ।

**राजा**—देवि ! यद्यपेतपरिश्रमा, तदा पुरः प्रचलितुं यतस्व ।

**दमयन्ती**—( २ ) अज्जउत्त ! निद्दायंति मे लोयणाइं, ता खणं इह ज्जेव सइस्सं ।

**राजा**—( सहर्षमात्मगतम् ) प्रियं नः ( प्रकाशम् ) देवि ! प्रश्रान्ताऽसि तद् विनोदय निद्रया क्षणं चङ्क्रमणश्रमम्, अहमपि निद्रास्यामि ।

**दमयन्ती**—( स्वगतम् ) ( ३ ) मा णाम मं पसुत्तं परिच्चईय कयाइ गच्छे, ता अत्तणो चीवरेण अज्जउत्तं परिवेढिय निद्दाएमि ।

---

( १ ) हा ! हताऽस्मि मन्दभागिनी । किं मां परित्यक्तुकाम आर्यपुत्रो यदेवं जल्पति ? अथवा प्रतिहतममङ्गलम् । एतत् खलु पिपासाखिन्नकण्ठस्य आर्यपुत्रस्य वचनस्खलितम् ।

( २ ) आर्यपुत्र ! निद्रायेते मे लोचने, ततः क्षणमिहैव शेष्ये ।

( ३ ) मा नाम मां प्रसुप्तां परित्यज्य कदाचिद् गच्छेत्, तदात्मनश्चीवरेण आर्यपुत्रं परिवेष्ट्य निद्रामि ।

( तथा कृत्वा शयनं नाटयति )

राजा—( विलोक्य ) कथं चरणचङ्क्रमणगाढप्ररूढगात्रपरिश्रमेण क्षणादेव निद्राप्रकर्षमधिरूढा देवी'। तदारभ्यते चण्डालकुलालङ्करणं कर्म। ( उत्थातुमिच्छति। साशङ्कम् ) कथमिति निबिडमापीड्य मामियं विरहकातरा शेते। तपस्विनी मामवधारयति मुखमधुरमवसानदारुणं कालकूटफलम्। सरले! मुञ्च मुञ्च त्रिजगत्परितापावापहेतुः सर्वभक्षी नलरूपेणानलोऽस्मि। अपि च भर्तृवत्सले!

विश्वासघातिनमकृत्यकरं श्वपाकं
मा मां स्पृश श्लथय दोःपरिरम्भमुद्राम्।
अस्मादृशामकरुणैकशिरोमणीनां
सर्वंसहाऽपि विरमत्यनुषङ्गपापात्॥ १२॥

( शनैर्दोःपरिरम्भमुन्मुच्य साशङ्कम् ) कथमम्बरेण परिवेष्टितोऽस्मि। ( विहस्य ) अयि यत्नपरे! किमीदृशैः प्रयत्नैरुपरुध्यति क्रूरकर्मपटीयान् नलः? यस्त्रिजगद्बन्धनेन प्रेम्णा न बध्यते तस्य मृणालतन्तुपेशलमम्बरं किमादधीत? एष तरवारिणा च्छित्त्वा गच्छामि। ( कृपाणं प्रति ) सखे! दर्शय फलमात्मसन्निधानस्य। ( सरोषम् ) कथं कृपालुरिव विलम्बसे? किञ्च नलस्यासिरसि दयालुश्चेति व्याहतं चरितम्। अपि च—

घनं प्रेमग्रन्थिं सहृदयमपि चिच्छेद हृदयं
कृपा केयं ब्रूहि स्फुरति हृदि निस्त्रिंश! भवतः?
यदद्यापि च्छेत्तुं न सहसि विदर्भेन्द्रतनया—
नितम्बस्तम्बाङ्कप्रणयिपरिधानांशुकमिदम्॥ १३॥

आः! ज्ञातम्, हस्तं सहायमपेक्षते। ( दक्षिणहस्तं प्रसार्य सरोषम् )

त्वया तावत् पाणिः प्रसभमुपगूढः परिणये
त्वमेवास्याः पीनस्तनजघनसौरभ्यसचिवः।
ततश्छेत्तुं वासः कृशकृप! कृपाणं कर! धग्—
त्रुटन्मर्मोत्सङ्गः कथमहह! नोपैषि विलयम्?॥ १४॥

अपि च—

देवीनीविच्छिदालोल! निर्दाक्षिण्यशिरोमणे!
सवाच्यः स विरिञ्चोऽपि हस्त! त्वां दक्षिणं सृजन्॥ १५॥

( विमृश्य )

यदि वा द्यूतकारस्य न नामाकृत्यमस्ति ते ।
आः ! गृहाण कृपाणं हुं हुं विधेहि द्विधांशुकम् ॥ १६ ॥

( अंशुकं द्विधाकृत्य शनैरुत्थाय )

भ्रातश्चूत ! वयस्य केसर ! सखे पुन्नाग ! यामो वयं
मा स्मास्माकमनार्यकार्यपरतां जानीत यूयं हृदि ।
द्यूतेच्छा क्व च कूबरस्य निषधाभर्तुः क्व चाक्षैर्जयो
वैदर्भीत्यजनं क्व चैष निखिलः कल्पः प्रसादो विधेः ॥ १७ ॥

भवतु, चरमं देवीवदनेन्दुविलोकनं कृत्वा व्रजामि । ( विलोक्य सास्रम् )

स्पृशति न मणिज्योत्स्नाच्छन्नं निशान्तजुषः पुरा
सुचिरमनिलोऽप्यङ्गं यस्या नलादिव शङ्कितः ।
विगतशरणा क्षुत्क्षामाङ्गी पटच्चरधारिणी
वनभुवि हहा ! सेयं शेते विदर्भपतिप्रसूः ॥ १८ ॥

हे देवि ! एष कर्मचण्डालो नलः प्रयाति । ( कतिचित् पदानि दत्त्वा सरोषमात्मानं प्रति ) आः क्षत्रियापसद ! पुरुषसारमेय ! भर्तृजाल्म ! श्वपाकनायक ! कृपाविकल ! हतनल ! कथमिमामेकाकिनीमात्मैकशरणां सधर्मचारिणीमस्मिन् गहने वने सन्त्यज्य प्रचलितोऽसि ? भवतु, वनदेवताः शरणं कृत्वा व्रजामि । ( प्रतिनिवृत्य दिशोऽवलोक्य )

कच्चित् काननदेवताः ! शृणुत मे यस्या वपुः कल्पयन्
जातः शिल्पिगणाग्रणीः कमलभूः सेयं विदर्भात्मजा ।
अस्याः कर्कशकर्मणा प्रियतमाभासेन निष्कारणं
त्यक्तायाः शरणं स्थ मा स्म नलवन्निस्त्रिंशतां गच्छत ॥ १९ ॥

( पुनरञ्जलिं बद्ध्वा )

निद्राच्छेदे क्व दयित ! गतोऽसीति तारं वदन्ती
विन्यस्यन्ती दिशि दिशि दृशं बाष्पकल्लोललोलाम् ।
देव्यः ! सर्वा वनवसतयो मातरः ! प्रार्थये व-
स्तत् कर्तव्यं कलयति तथा कुण्डिनाध्वानमेषा ॥ २० ॥

( नेपथ्ये )

( १ ) अज्ज ! एदं शिशिलशलिलपूलिदं शलं, ता एहि सत्थवाहस्स गडुय कहेमि।

**राजा**—कथं पक्कणवासी कोऽप्यागच्छति ( साशङ्कम् ) यदि कथमप्येषा शबरस्यास्य कोलाहलेन निद्रामपजह्यात् तदा मामवबध्नीयात्। तद् व्रजाम्यहम्। देवि ! नदानीं चरममाभाष्यसे। वनदेवतास्ते शरणम्। एष पापिष्ठश्रेष्ठो निस्त्रिंशशिरोमणिः परवञ्चनाचतुरः क्षत्रियापदेशेन ब्रह्मराक्षसः क्रूरकर्मा चाण्डालचक्रवर्ती नलः प्रयाति। ( इत्यभिधाय पूत्कुर्वन् निष्क्रान्तः )

( ततः प्रविशति पुरुषः )

**पुरुषः**—( २ ) अज्ज! एदं शिशिलशलिलपूलिदं शलं। ता एहि सत्थवाहस्स कहेमि ( परिक्रम्य विलोक्य च ) कथं इत्थिका! अम्मो! अदिलूविणी! हीमाणहे कधं अलण्णे एगागिणी ( सदयम् ) मा एदं केवि भुक्खाकलाले लक्खसे भिक्खसे रो खाए। ता उत्थावए हगे। अज्जे अज्जे ! उत्थेहि उत्थेहि ( सरोषम् ) कहं अइनिद्दाए मुदा विव न सुणेदि शद्दं? भोदु, उप्पाडिय एदं अन्नत्थ नएमि। ( तथा कृत्वा निष्क्रान्तः )

## ॥ पञ्चमोऽङ्कः ॥

( १ ) आर्य ! एतत् शिशिरसलिलपूरितं सरः, तदेहि सार्थवाहाय गत्वा कथयामि।

( २ ) आर्य ! एतत् शिशिरसलिलपूरितं सरः, तदेहि सार्थवाहाय कथयामि। कथं स्त्रीः! अहो! अतिरूपवती, हा! कथमरण्ये एकाकिनी? मैनां कोऽपि बुभुक्षाकरालो राक्षसो भक्षको वा खादयेत् (?)। तदुत्थापयाम्यहम्। आर्ये! आर्ये! उत्तिष्ठ उत्तिष्ठ। कथमतिनिद्रया मृतेव न शृणोति शब्दम्? भवतु, उत्पाट्यैतामन्यत्र नयामि।

१ क. रक्खोए।

# षष्ठोऽङ्कः ।

( ततः प्रविशति नलः )

**नलः**—( दमयन्तीमनुस्मृत्य सानुतापम् )

राज्यं हारितवानहं नहि नहि व्याधत्त सर्वं विधि-
देवीं हाऽत्यजमस्मि तत्र विपिने यद्वा स्त्रियो बन्धनम् ।
तां पश्येयमहं वनेऽथ गहने तस्याः कुतः प्राणितं
ह्रीर्मे नो न दया दुरोदरकृतः का वा त्रपा का कृपा ? ॥ १ ॥

( पुनः सखेदम् )

नास्मार्षं नयमस्मि नाधिमनसं प्रेमाणमाशिश्रियं
नाकार्षं कुलमुज्ज्वलं हृदि कृपां पापो न वाऽजीगणम् ।
तां तस्मिन् गहने वने विरहयन् कर्माचरं दुर्जरं
धिग् मां नाहमवेक्षणीयवदनो नार्हामि पङ्क्तिं सताम् ॥ २ ॥

अहह ! कथमनिमित्तशत्रुर्दुरात्माऽहमात्मैकशरणां तां तपस्विनीमपाकृतवान् !

( ऊर्ध्वमवलोक्य )

न प्रेम नाप्यभिजनं न गुणं न सेवां
चित्ते दधत्युपकृतिं किल ये श्रयन्तः ।
किं दैव ! नैव निहता भवता हतास्ते
गर्भस्थिताः प्रसवमात्रभृतोऽथ मर्त्याः ॥ ३ ॥

( स्मृत्वा सचिन्तम् )

स्फुरति तिमिरे घूकव्राते ध्वनत्यतिभैरवं
ककुभि ककुभि व्यालानीके विसर्पति सध्वनौ ।
चरममचलं याते पत्यौ रुचां चकितेक्षणा
शरणमधिकं भीरुर्देवी करिष्यति किं वने ? ॥ ४ ॥

( विमृश्य )

तातनिषधेन भुजगरूपमास्थाय समयोचितमनुशिष्टोऽस्मि । इदमप्यतिरमणीयमाचरितं तातेन यन्मम रूपं विपर्यासितम् । अनुपलक्षितरूपो हि सुखमेवाहमिदानीमयोध्याधिपतेरभ्यर्णे सूपकारादिकर्माण्यादधानः स्थास्यामि । ( साश्चर्यम् ) अहह ! पश्य

---

१ ख. ग. निहिता ।

कीदृशी सुरसद्मसमृद्धिरासादिता तातेन । सर्वथा भूर्भुवःस्वस्त्रयेऽपि नासाध्यमस्ति तपसाम् । ( सविषादम् ) अहो ! मे महान् प्रमादः । नन्वहं जीवलकेन महीपतेर्दधिपर्ण-स्याज्ञया विदर्भागतभरतैः प्रयुज्यमानं नाटकमवलोकितुमाकारितोऽस्मि । तद् व्रजामि त्वरितम् । अपि नाम नटेभ्यः कापि दमयन्तीप्रवृत्तिरपि लभ्येत । ( परिक्रामति । नेपथ्यमवलोक्य ) कथमयमिक्ष्वाकुकुलतिलको देवो दधिपर्णः सपर्णनाम्नाऽमात्येन सह जल्पन्नास्ते । जीवलकोऽप्यत्रैव तिष्ठति । भवतु, प्रणमामि ।

( ततः प्रविशति यथानिर्दिष्टो राजा )

राजा—अमात्य ! पश्याकृतिविरुद्धमस्य बाहुकनाम्नो वैदेशिकस्य कलासु कौशलम् । किमेतस्य सर्वाङ्गवक्रस्य तदिदमश्वलक्षणवैलक्षण्यम्, सोऽयं सूर्यपाकविधिः, सेयमपरास्वपि क्रियासु चातुरी सम्भवति ।

सपर्णः—अस्मिन् नयनोद्वेगाञ्जने कलाकलापमावपन्नसंशयं विरञ्चिर्भ्रान्तः ।

जीवलकः—देव ! बाहुकः प्रणमति ।

राजा—बाहुक ! इत आस्यताम् । ( नलः प्रणम्योपविशति )

( स्मृत्वा ) किमद्यापि चिरयन्ति रङ्गोपजीविनः ?

जीवलकः—भो भरतपुत्राः ! प्रस्तूयतां नाट्यम् ।

( प्रविश्य )

सूत्रधारः—नलान्वेषणनामप्रबन्धाभिनयावधानाय महाराजं दधिपर्ण-मभ्यर्थये

नलः—( स्वगतम् ) कोऽयं नलः ? किमहमेव ? यदि वाऽपारे जगत्पारावारे न दुर्लभो नामसंवादः ।

राजा—एष सावधानोऽस्मि । ततः प्रस्तूयताम् ।

( नेपथ्ये )

( १ ) हा अज्जउत्त ! परित्तायाहि मं, भायामि एगागिणी करालवाल-विहुरे रन्नकुहरे ।

---

( १ ) हा आर्यपुत्र ! परित्रायस्व मां, बिभेमि एकाकिनी करालव्यालविधुरेऽरण्यकुहरे ।

नलः—( स्वगतम् ) मयेव दुरात्मना केनाप्येकाकिनी गहने वने किं प्रिया परित्यक्ता ?

राजा—अमात्य ! प्रथमेऽपि नाट्यारम्भे कष्टमतिकरुणो रसः ।

( नेपथ्ये )

अये पिङ्गलक ! तामनुकूलय तपस्विनीं येन सार्थवाहान्तिकं नयामः ।

सूत्रधारः—यदमी दमयन्ती-गन्धार-पिङ्गलकनेपथ्यधारिणो रङ्गोपजीविनः संरभन्ते, तज्जाने प्रवृत्तं नाट्यम् । तदहमपि कार्यान्तरमनुतिष्ठामि ।

( अञ्जलिं बद्ध्वा )

जयति स पुरुषविशेषो नमोऽस्तु तस्मै त्रिधा त्रिसन्ध्यमपि ।
स्वप्नेऽपि येन दृष्टं नेष्टवियोगोद्भवं दुःखम् ॥ ५ ॥

( इत्यभिधाय निष्क्रान्तः )

( ततः प्रविशति दमयन्ती गन्धारः पिङ्गलकश्च )

गन्धारः—आर्ये ! अलमतिप्रलपितेन । आगच्छाचलपुरयायिनो धनदेव-नाम्नः सार्थवाहस्याभ्यर्णम् ।

दमयन्ती—( १ ) अज्ज ! अत्तणो भत्तारं गवेसइस्सं ।

गन्धारः—आर्ये ! कस्ते पतिः ?

नलः—( ससम्भ्रममात्मगतम् ) किमेषाऽभिधास्यति ?

दमयन्ती—( २ ) निसढाहिवदी नलो ।

नलः—( स्वगतम् ) आः पाप ! नलहतक ! विलीयस्व । किमतः परं प्राणिषि ? ध्रुवमुपरता देवी । कथमपरथा नाट्येषु तत्प्रतिबिम्बेन व्यवहारः ।

पिङ्गलकः—( सरोषम् ) ( ३ ) शिशिले ! किं तेण कूलकम्मणा चंडा-लेण कलिस्ससि ? ता सत्थवाहपासं एहि ।

( १ ) आर्य ! आत्मनो भर्तारं गवेषयिष्यामि ।

( २ ) निषधाधिपतिर्नलः ।

( ३ ) शिशिरे ! किं तेन क्रूरकर्मणा चण्डालेन करिष्यसि ? तत्सार्थवाहपार्श्वमेहि ।

**राजा**—( सहर्षम् ) साधु भो भरत ! साधु ! स्वप्नेऽप्यदृश्यवदनोऽसौ येनेयमेकाकिनी परित्यक्ता।

**नलः**—( सरोषमिव ) अस्पृश्योऽश्रोतव्योऽग्राह्यनामा चेत्यप्यभिधीयताम्।

**गन्धारः**—तर्हि गवेषय क्वापि।

**दमयन्ती**—( १ ) एदस्सिं सरे मह निमित्तं सलिलमाणेदुं गदो भविस्सदि। ता इत्थ गवेसिस्सं।

**गन्धारः**—बाले ! मूढाऽसि। यस्त्वां सुप्तामपजहाति, स किं त्वन्निमित्तमम्भः समानयति ?

**दमयन्ती**—( २ ) अध मा एवं भण। अहं पाणेहिंतो वि अज्जउत्तस्स पियदरा।

**राजा**—परित्यागेनाप्यमुना निवेदितं त्वयि भर्तुः प्रेम।

**दमयन्ती**—( परिक्रम्य ) ( ३ ) कधं एदं सरो, न उण अज्जउत्तो दीसदि। भोदु, एदं चक्कवायघरणिं पुच्छामि।

सहि ! चक्कवायदइए ! दइयं किं मह न साहसे सहसा ?
पियविरहियाण दुक्खं पच्चक्खं तुज्झमणुनिच्चं ॥ ६ ॥

**राजा**—उचितमुक्तवती।

अनुभूतं न यद् येन रूपं नावैति तस्य सः।
न स्वतन्त्रो व्यथां वेत्ति परतन्त्रस्य देहिनः ॥ ७ ॥

**दमयन्ती**—( विमृश्य ) ( ४ ) पियपणयगव्विदा ण पडिवयणं पडिच्छदि। ( सरोषम् ) हंजे रहंगिए ! केरिसो दे एस पियपणयदप्पो ?

( १ ) एतस्मिन् सरसि मम निमित्तं सलिलमानेतुं गतो भविष्यति। तदत्र गवेषयिष्यामि।

( २ ) अथ मैवं भण। अहं प्राणेभ्योऽपि आर्यपुत्रस्य प्रियतरा

( ३ ) कथमेतत् सरो न पुनरार्यपुत्रो दृश्यते ? भवतु एतां चक्रवाकगृहिणीं पृच्छामि।
सखि चक्रवाकदयिते ! दयितं किं मम न कथयसि सहसा ?
प्रियविरहितानां दुःखं प्रत्यक्षं तवानुनित्यम् ॥

( ४ ) प्रियप्रणयगर्विता न प्रतिवचनं प्रतीच्छति। सखि रथाङ्गि ! कीदृशस्त एष प्रियप्रणयदर्पः ?

अहं पि पुरवं ईदिस यासं । संपदं ज्जेव अणाहा जादा।

गन्धारः—( सास्रम् ) आर्ये ! किमेषा तिरश्ची वराकी जानाति ?

दमयन्ती—( १ ) ता अन्नत्थ पुच्छिस्सं ।

( विलोक्य संस्कृतमाश्रित्य च )

मातः कुञ्जरपत्नि ! तात हरिण ! भ्रातः शिखण्डिन् ! कृपां
कृत्वा ब्रूत मनाक् प्रसीदत कृतो युष्माकमेषोऽञ्जलिः ।
दृष्टः क्वापि गवेषयन्निह वने भीमात्मजां नैषधो
भूपालः सरणिं सृजन्नविरलैर्बाष्पोर्मिभिः पङ्किलाम् ॥ ८ ॥

पिङ्गलकः—( २ ) अज्जे ! कीस उणं तेण पदिणा तुमं पडिचत्ता सि ?

दमयन्ती—( सबाष्पम् ) ( ३ ) अज्ज ! दोसं न याणामि ।

अप्पा समप्पिओ पढमदंसणे वणमिणं च सह चलिया ।
सुवणेमि पइं अन्नं न महेमि तहा वि परिचत्ता ॥ ९ ॥

अहवा पडिहदममङ्गलं । नाहं अज्जउत्तेण परिचत्ता, किं तु मह दुक्खविणोयणत्थं परिहासो कदो ।

( पुनराकाशे )

( ४ ) एगागिणी अहं भीलुगा य निम्माणुसं व्व वणमिणमो ।
ता एहि एहि पिययम ! अलाहि परिहासकीलाए ॥ १० ॥

अहमपि पूर्वमीदृश्यासम् । साम्प्रतमेवानाथा जाता।

( १ ) तदन्यत्र प्रक्ष्यामि ।

( २ ) आर्ये ! किं पुनस्तेन पत्या त्वं परित्यक्ताऽसि ?

( ३ ) आर्य ! दोषं न जाने ।

आत्मा समर्पितः प्रथमदर्शने वनमिदं च सह चलिता ।
स्वप्नेऽपि पतिमन्यं न काङ्क्षामि तथापि परित्यक्ता ॥ ९ ॥

अथवा प्रतिहतममङ्गलम् । नाहमार्यपुत्रेण परित्यक्ता, किन्तु मम दुःखविनोदनार्थं परिहासः कृतः ।

( ४ ) एकाकिन्यहं भीरुका च निर्मानुषं च वनमिदम् ।
तदेहि एहि प्रियतम ! अलं परिहासक्रीडया ॥ १० ॥

---

१ ग. चेव ।

( प्रतिरवमाकर्ण्य आकाशे )

( १ ) किं मं वाहरसि ? एस आगच्छामि। ( सरभसं धावति )

गन्धारः—( सबाष्पम् ) आर्ये! प्रतिश्रुतिरियम्।

दमयन्ती—( सपदि स्थित्वा ) ( २ ) अज्ज! एसा पडंसुया ?

गन्धारः—एषा प्रतिश्रुत्।

दमयन्ती—( ३ ) ( स्वप्रतिच्छायामालोक्य, सहासमुच्चैःस्वरम् ) दिट्ठिया दिट्ठिया अज्जउत्त! दिट्ठो सि दिट्ठो सि कहिं दाणिं गच्छसि ? ( पुनः सरभसं धावित्वा ससीत्कारं च स्थित्वा गन्धारं प्रति सबाष्पम् ) अज्ज! दब्भंकुरेहिं विद्धो मे चलणो। ता अवणेहि एदो अहवा चिट्ठ सयं ज्जेव अवणिस्सं। नाहं परपुरिसं फुसेमि।

राजा—( सरभसमुत्थाय ) भगवति! पतिव्रते! नमस्ते।

जीवलकः—देव! किमिदम् ? सिंहासनमलङ्क्रियताम्। ननु कूटनटघटनेयम्।

( राजा सव्रीडमुपविशति )

नलः—( सदुःखमात्मगतम् )

श्रुते! बाधिर्यं त्वं कलय विभृतां किञ्च नयने!
युवामन्धीभावं द्रुतमनगदङ्कारविषयम्।
शृणोम्यस्यास्तारं न रुदितमहं येन तदिदं
न वा पश्याम्येतां विरहहरिणीं हारिललिताम्॥ ११॥

गन्धारः—( सबाष्पम् )

अस्याः क्षोणि! विधेर्वशादभिनवां संशिक्षयन्त्यास्त्वयि
भ्रान्तिं किं चरणौ चिरादतिखरैर्दर्भाङ्कुरैर्विध्यसि ?
व्यापत्तौ वनितासु कर्तुमुचितस्ते पक्षपातः स्त्रियाः
पारुष्यं पुरुषः स नाम विभृतां क्षोणीपतिर्नैषधः॥ १२॥

( १ ) किं मां व्याहरसि ? एष आगच्छामि।

( २ ) आर्य! एषा प्रतिश्रुतिः ?

( ३ ) दिष्ट्या! दिष्ट्या! आर्यपुत्र! दृष्टोऽसि दृष्टोऽसि, कुत्रेदानीं गच्छसि ? आर्य! दर्भाङ्कुरैर्विद्धो मे चरणः। तदपनयेतोऽथवा तिष्ठ, स्वयमेवापनेष्यामि। नाहं परपुरुषं स्पृशामि।

१ ख. ग. गच्छिसि।

**सपर्णः**—( सरोषमुत्थाय ) आः ! शैलूषापसद ! येनेयं पतिव्रता गहने वने निर्निमित्तमग्राह्यनाम्ना चण्डालेन परित्यक्ता, तमपि पापीयांसं क्षोणीपतिमभिदधासि?

**राजा**—अमात्य ! स्वस्थो भव, नाटकमिदम् ।

( सपर्णः सलज्जमुपविशति )

**नलः**—( राजानं प्रति )

एनामरण्यभुवि मुक्तवतोऽपि दोषो-
न्मेषो नलस्य न मनागपि किन्तु तेषाम् ।

**राजा**—( सभयम् ) येऽस्या एतामवस्थामवलोकयन्ति ?

**नलः**—नहि नहि

यैरेष कल्मषमयो न कृतस्तदानी-
मेवाग्निसादपनयैर्हतलोकपालैः ॥ १३ ॥

**राजा**—( सरोषम् ) बाहुक ! वृथा भगवतो लोकपालानुपालम्भसे। ननु नलं पश्यन्तोऽपि पापेनोपलिप्यन्ते लोकपालाः, किं पुनर्व्यापादयन्तः ?

**पिङ्गलकः**—( सास्रम् ) ( १ ) अज्जे ! न य से पाविट्ठे तुह पदी, किं पुण एसा पडिच्छाया ।

**दमयन्ती**—( २ ) अज्ज ! एसा मम •ज्जेव पडिच्छाया, न उण अज्जउत्तो ? ता किं सच्चकं ज्जेव परिचत्तम्हि ?

( आत्मानमवलोक्य सखेदम् )

मुक्ताहार ! विहारमातनु ननु स्वैरं क्वचित् साम्प्रतं
पुष्पापीड ! किमद्य पीडयसि मे सीमन्तसीमाङ्गणम् ?
मञ्जीराणि ! रणन्ति किं श्रवणयोः पुष्णीथ दुःस्थां व्यथां ?
त्यक्ता तेन यदर्थमर्थितवती युष्मासु मैत्रीमहम् ॥ १४ ॥

**राजा**—( सरभसमुत्थाय ) पतिव्रते ! पतिव्रते ! विशरारूणि प्रायेण शरीरिप्रेमाणि । विशेषतस्तव तस्य भर्तुरकुलीनस्य । तदलममुना गवेषितेन । अस्माकमभ्यर्णमुपैहि । इतः प्रभृति नस्तत्रभवती देवता वा माता वा सुता वा ।

---

( १ ) आर्ये ! न च स पापिष्ठस्तव पतिः, किं पुनरेषा प्रतिच्छाया ।

( २ ) आर्य ! एषा ममैव प्रतिच्छाया न पुनरार्यपुत्रः ? तत् किं सत्यमेव परित्यक्तास्मि ?

सपर्णः—देव! कोऽयं व्यामोहः? ननु विज्ञप्तं मया देवाय नटबिभीषिकेयम्। सिंहासनालङ्करणेन प्रसादः क्रियताम्।

( राजा सविलक्षमुपविशति )

नलः—( सखेदमात्मगतम् )

मातः! प्रसीद वसुधे! विहितोऽञ्जलिस्ते
पातालमूलपथिकं विवरं प्रयच्छ।
आशीर्लताशतघनेषु फणीन्द्रवक्त्र-
कोणाश्रमेषु ननु येन भवामि शान्तः॥ १५॥

दमयन्ती—( किञ्चित् परिक्रम्य ) (१) कथं मज्झण्हो वट्टदि? न सक्केमि दिणेसरतावसंतावेण परिक्कमिदुं।

( ऊर्ध्वमवलोक्य सबाष्पम् )

हा देव दिणेसर! किं दहेसि किरणेहिं देहदहणेहिं?
जइ सो निसढाहिवई अदयमणो किं तुहं पि तहा?॥ १६॥

राजा—( सरभसं दमयन्तीं प्रति )

आः स्त्रीरत्न! पतिव्रते! शठमतेः क्रूरस्य दुष्टात्मनः
पत्युस्तस्य पुनः पुनः सकलुषां मा मा गृहाणाभिधाम्।
तन्नामश्रवणाद् वयं च निखिला पर्षच्च सेयं नटा-
श्चैतेऽसौ ननु बाहुकश्च महता पापेन संलिप्यते॥ १७॥

नलः—( सरोषम् ) किमिदमपरिज्ञातमुच्यते देवेन। क्रूरचक्रवर्ती नलोऽस्मि, योऽहमकाण्डे देवीमेकाकिनीं गहने वने निर्लज्जः सन्त्यजामि। तस्य महत्यपि पाप्मनि का किलाशङ्का?

राजा—( ससम्भ्रमम् ) कस्त्वमसि?

---

(१) कथं मध्याह्नो वर्तते? न शक्नोमि दिनेश्वरतापसन्तापेन परिक्रमितुम्।
हा देव दिनेश्वर! किं दहसि किरणैर्देहदहनैः?
यदि स निषधाधिपतिरदयमना: किं त्वमपि तथा?॥ १६॥

नलः—( स्वगतम् ) कथं विषादमूर्च्छालेन मयाऽऽत्मा प्रकाशितः ! भवत. ( प्रकाशम् ) बाहुकमूपकारोऽस्मि ।

राजा—तत् किं नलोऽस्मीत्युक्तवानसि ?

नलः—किमहं नलोऽस्मीत्युक्तवानुतानुक्तमपि नाट्यरसाकुलितचेता देव एवमशृणोत् इति सन्देहः ।

राजा—ध्रुवमहमस्मि भ्रान्तः । अपरथा क्व स महाराजनिषधस्यापत्यं दर्शनीयरूपो नलः, क्व भवान् सर्वाङ्गविकृताकृतिः !

नलः—( ऊर्ध्वमवलोक्य स्वगतम् )

कल्पान्तकल्पमुपकल्प्य महो दिनेश !
मां भस्मसात् कुरुतरामचिराय पापम् ।
विश्वासघातजनितेन न चेदनेन
पापेन हन्त ! नियतं परिगृह्यसे त्वम् ॥ १८ ॥

पिङ्गलकः—( १ ) अज्जे ! जदि दिणेशलकिलणेहिं आदिचिलं संताविदासि, ता एदम्मि सहयालनिकुंजे पविश।

गन्धारः—( पुरो भूत्वा ) इत इत आर्या ।

( सर्वे परिक्रामन्ति )

( विलोक्य सभयं निवृत्त्य च ) आर्ये ! निवर्तस्व निवर्तस्व । चिरप्ररूढगाढबुभुक्षाक्षामकुक्षिः प्रतिनादमेदुरेण क्ष्वेडानिनादेन समन्ततः शोषयन् वन्यस्तम्बेरमाणां मदजलानि करालजिह्वाजटालवक्त्रकुहरस्तरुणगुञ्जापुञ्जारुणेक्षणः प्रतिक्षणं लोललाङ्गूलदण्डेन साटोपमाच्छोटयन्नवनिपीठमेकः केशरिकिशोरः सहकारनिकुञ्जाभ्यन्तरमधिवसाति ।

दमयन्ती—( २ ) अज्ज ! मज्झे केसरी चिट्ठदि ? दिट्ठिया करिस्सदि मे दुक्खमोक्खं ।

---

( १ ) आर्ये ! यदि दिनेश्वरकिरणैरतिचिरं सन्तापिताऽसि, तदेतस्मिन् सहकारनिकुञ्जे प्रविश ।

( २ ) आर्य ! मध्ये केसरी तिष्ठति ? दिष्ट्या करिष्यति मे दुःखमोक्षम्।

( पिङ्गलको विलोक्य सभयं नश्यति )

**दमयन्ती**—( १ ) भोदु, उवसप्पामि णं।

**नलः**—( विलोक्य ससम्भ्रममात्मगतम् ) कथं देवीं पञ्चाननो व्यापादयितु-मपक्रान्तः ! हा ! हतोऽस्मि । ( विमृश्य ) वीराग्रणीः खल्वसौ तदमुं सामप्रयोगेण वारयामि ।

( सरभसमुत्थाय )

एकाकिन्यबला वियोगविधुरा घोरान्तरप्रान्तर–
क्षोणीपादविहारनिष्ठितवपुस्त्वग्मांसरक्तस्थितिः ।
अस्यां कालकरालवक्त्रकुहरे प्रस्थापितायां हरे !
किं शौर्यं भवतोऽतिशायि भविता को वा बुभुक्षाक्षयः ? ॥ १९ ॥

( विलोक्य ) कथं साम्ना न विरमति ? भवतु दानप्रयोगं दर्शयामि ।
अथ तीव्रक्षुधा सत्यमौचित्यमतिवर्तते ।
मुञ्चैनां तर्हि मां भुङ्क्ष्व पतितोऽस्मि तथा(वा)ऽग्रतः ॥ २० ॥

( इति रङ्गभूमौ पतितुमिच्छति )

**राजा**—अलमलमतिसम्भ्रमेण । बाहुक ! ननु नाट्यमिदम् ।

**नलः**—( सलज्जमात्मगतम् ) किमिदं मया शोकव्याकुलेन व्यवसितम् ! भवतु । ( प्रकाशम् ) देव ! करुणारसातिरेकेण विस्मारितोऽस्मि ।

**दमयन्ती**—( उपसृत्य कण्ठीरवं प्रति )

मा वा प्रीणय नैषधस्य नृपतेः काञ्चित् प्रवृत्तिं दिश-
न्नात्मानं यदि वा दिवाकरकरैर्भृष्टेन देहेन मे ।
द्वावप्यद्य पथाविमौ मम मनःप्रीत्यै ततस्ते प्रियं
यत् पुष्णात्यचिरात् तदाचर हरे ! मा स्माभिशङ्कां कृथाः ॥ २१ ॥

( विलोक्य ) ( २ ) कधं एस परम्मुहो जादो ? न किंपि पडिवयणं पयच्छदि ।

**राजा**—बाहुक ! ध्रुवमयं मृगारिरेतस्याः पतिव्रताव्रतप्रभावेण प्रतिहतः ।

( १ ) भवतु, उपसर्पाम्येनम् ।

( २ ) कथमेष पराङ्मुखो जातो ? न किमपि प्रतिवचनं प्रयच्छति ।

**नलः**—( स्वगतम् ) दिष्ट्या स्वयमेव प्रतिनिवृत्तमरिष्टम् । तदहमतः परमुत्थाय नाट्यं निवारयामि । येन मे पुनर्देवीविनिपातदर्शनं न भवति ।

( ससंरम्भमुत्थाय साक्षेपम् )

अपारे कान्तारे व्यसनशतकीर्णे प्रतिदिशं
कियत्कृत्वः सत्त्वं स्फुरति भृशमस्याः फलति च ।
नटा ! नाट्यं हंहो ! तदिह खलु कृत्वोपरमत
यतो द्रष्टुं स्त्रीणां वधविधिमयोग्याः क्षितिभुजः ॥ २२ ॥

**सपर्णः**—( विहस्य ) बाहुक ! किमिदं पुनः पुनरात्मनो विस्मरणम् । कथं नाट्यमपि साक्षात् प्रतिपद्यसे? तद् यथास्थानमुपविश ।

**दमयन्ती**—( १ ) कधं एदिणा वि न मे दुक्खमोक्खो कदो ! ता एयम्मि सहयारे अत्ताणं उब्बंधिय वावाएमि । ( दिशोऽवलोक्य ) हा अज्जउत्त ! एसा तए निक्कारणनिक्करुणेण परिच्चत्ता असरणा दमयन्ती विवज्जदि । अंबाओ वणदेवयाओ ! कधिह अज्जउत्तस्स एदं मह वि(व)वसिदं । हा ! अंब पुप्फवदीए ! हा! ताय भीमरह ! कहिं सि ? देहि मे पडिवयणं । ( लतापाशं कण्ठे बध्नाति )

**राजा**—( सरभसमुत्थाय ) भगवति पतिव्रते ! अलमात्मनो विघातेन ।

**सपर्णः**—बाले ! किमिदमकृत्याचरणम् ?

**जीवलकः**—आर्ये ! नार्हसि नवे वयसि दुरात्मनः स्वपतेर्निमित्तमकाण्डे प्राणान् परित्यक्तुम् ।

**नलः**—( ससम्भ्रममुच्चैःस्वरम् ) देवि देवि ! अलमलमतिसाहसेन । नार्हसि मामात्मनो वधेन दुरात्मानं कलङ्कयितुम् । अपि च निस्त्रिंशस्य निर्मर्यादस्य पापीयसः पत्याभासस्य मम कृते वृथा सतीचक्रावतंसमात्मानं व्यापादयसि ।

**गन्धारः**—( विलोक्य सभयसम्भ्रमम् ) अये पिङ्गल ! पिङ्गल ! छिन्द्धि छिन्द्धि पाशमस्या यावदियमद्यापि श्वसिति ।

( १ ) कथमेतेनापि न मे दुःखमोक्षः कृतः ! तदेतस्मिन् सहकार आत्मानमुद्बध्य व्यापादयामि । हा ! आर्यपुत्र ! एषा त्वया निष्कारणनिष्करुणेन परित्यक्ताऽशरणा दमयन्ती विपद्यते । अम्बा वनदेवताः ! कथयतार्यपुत्रायैतन्मम व्यवसितम् । हा ! अम्ब पुष्पवति ! हा ! तात भीमरथ ! कुत्रासि ? देहि मे प्रतिवचनम् ।

( पिङ्गलकः सरभसं धावित्वा लतापाशं छिनत्ति। दमयन्ती मूर्छिता पतति )

पिङ्गल! ध्रुवमियमपश्यन्ती प्रियं क्वापि विपत्स्यते। तदिदानीमुत्पाट्य सार्थवाहाय समर्पयावः। ( तथा कृत्वा निष्क्रान्तौ )

गर्भाङ्कः॥

राजा—परां काष्ठामधिरूढवान् करुणो रसः।

सपर्णः—देव! रसप्राणो नाट्यविधिः। वर्णार्थबन्धवैदग्धीवासितान्तःकरणा ये पुनरभिनयेष्वपि प्रबन्धेषु रसमपजहति विद्वांस एव ते न कवयः।

न तथा वृत्तवैचित्री श्लाघ्या नाट्ये यथा रसः।
विपाकक्रममप्याम्रमुद्वेजयति नीरसम्॥ २३॥

राजा—( स्मृत्वा ) बाहुक! 'देवि! नाहमात्मनो विघातेन कलङ्कयितव्यः' इत्यभिदधानो नल इव लक्ष्यसे। तत् कथय परमार्थं समर्थय नः प्रार्थनाम्। कस्त्वमसि? किमर्थं च दुःस्थावस्थः?

( प्रविश्य )

प्रतीहारः—देव! विदर्भाधिपतिप्रेषितो भद्राभिधानः पुरुषो द्वारि वर्तते।

राजा—( ससम्भ्रमम् ) शीघ्रं प्रवेशय।

प्रतीहारः—यदादिशति देवः

( इत्यभिधाय निष्क्रान्तः। प्रविश्य भद्रः प्रणमति )

राजा—भद्र! किमर्थं भवत्प्रेषणेनास्मान् विदर्भाधिपतिः पवित्रितवान्?

भद्रः—महाराज! भीमरथस्य प्राणेभ्योऽपि प्रिया पुत्री समस्ति।

नलः—( ससम्भ्रमम् ) सा खलु दमयन्ती।

भद्रः—ततस्तस्याः प्रातः स्वयंवरविधिं विदर्भाधिपतिर्विधा[illegible]ति।

नलः—( स्वगतम् ) अहो! धर्मविप्लवः। ( पुनः सरोषम् ) आः! कृतान्तकटाक्षितो मयि प्राणति दमयन्तीं कः परिणेष्यति?

राजा—ततः किम्?

भद्रः—तथा कथञ्चन प्रयतितव्यं यथा श्वः स्वयंवरमण्डपमयोध्याधिपतिरलङ्करोति।

राजा—भद्र ! शतयोजनप्रमाणमध्वानं किमेकयैव त्रियामया वयं लङ्घयितुमलम्भूष्णवः ?

नलः—( स्वगतम् ) अहं तत्र गत्वा धर्मविप्लवं निवारयामि । ( प्रकाशम् ) देव ! मा भैषीः, अहं ते सर्वं समञ्जसमाधास्यामि ।

राजा—भद्र ! 'एते वयमागता एव' इति निवेदय विदर्भाधिपतेः ।

भद्रः—यथादिशति देवः ( इत्यभिधाय निष्क्रान्तः )

राजा—( ऊर्ध्वमवलोक्य ) कथमस्तं गतो गभस्तीनामधिपतिः? कथारसास्वादोपहृतचेतोभिरस्माभिः सन्ध्याविधिरप्यतिलङ्घितः ।

( नेपथ्ये )

प्रविशन्तीं कैरविणीं सन्ध्यारागानले विरहदुःखात् ।
कुवलयपतिरयमेष प्रतिषेद्धुमिवोर्ध्वकर एति ॥ २४ ॥

राजा—कथमेष बन्दी चन्द्रोदयं पठति ? अमात्य ! त्वं स्वं नियोगमशून्यं कुरु । वयमपि सकलदेवताधिचक्रवर्तिनो भगवतो नाभिनन्दनस्य सन्ध्यासपर्याविधिमनुष्ठातुं प्रतिष्ठामहे ।

( इति निष्क्रान्ताः सर्वे )

॥ षष्ठोऽङ्कः ॥

# सप्तमोऽङ्कः ।



( ततः प्रविशति रथेन राजा बाहुकश्च )

राजा—बाहुक ! प्रभातप्राया त्रियामिनी[1] ।

सहस्रांशोर्धाम्नां दिशि दिशि तमोगर्भितमिदं
कुलायेभ्यो व्योम्नि व्रजति कृतनादं खगकुलम् ।
दवीयस्तामेतान्यपि जहति युग्मानि शनकै
रथाङ्गानामस्यां सपदि वरदायास्तटभुवि ॥ १ ॥

अपि च यथा पुरः प्राकारनगरागारसन्निवेशाः समुन्मीलन्ति तथा जाने प्राप्तः पताकी कुण्डिनस्य परिसरम् ।

नलः—( स्वगतम् ) अहो ! दिव्यस्य तेजसः सोऽप्यपूर्वः प्रभावः । स्मरणमन्त्राभिमन्त्रितमात्रोऽपि तातस्तथा कथञ्चन वाजिनोऽधिष्ठितवान् यथा जवेन पवनमपि पराजयन्ते । ( सहर्षम् ) चिरादद्य देवीं द्रक्ष्यामीति हर्षप्रकर्षेण पुलककोरकितगात्रोऽस्मि । ( पुनः सविषादम् ) यदि वा—

त्यक्ता यद् विपिने वनेचरघने निद्रालुरेकाकिनी
तत् त्यक्त्वापि न जीवितं रहितवानस्मि प्रियप्राणितः ।
एतेनाद्भुतकीर्तिमुन्नमयता विस्फूर्जितेनोर्जितं
वक्त्रं दर्शयितुं श्वपाकचरितस्तस्याः कथं स्यां सहः ? ॥ २ ॥

अपि च—

अपकृत्योपकार्येषु ये भवन्त्यर्थिनः पुनः ।
तेषु मन्ये मनुष्यत्वं विधेर्वार्धकविक्रिया ॥ ३ ॥

राजा—बाहुक ! क्वचिदपि प्रदेशे पताकिनं विधृत्य मार्गश्रममपनयामः ।

नलः—( विलोक्य साशङ्कम् ) देव ! किमिदं स्वयंवरविधिविरुद्धमतिकरुणमालोक्यते ? तथाहि—

आक्रन्दः श्रुतिदुर्भगः प्रतिदिशं बाष्पार्द्रगण्डस्थलो
लोकः सर्वत एष वेषघटना पौरेषु शोकोन्मुखी ।

1 ख. ग. त्रियामा ।

विश्रान्ताखिलगीतवाद्यविधयः सङ्गीतशालाभुवो
वार्ताक्षिप्तजनस्य पुञ्जिभिरितः पर्याकुला वीथयः ॥ ४ ॥

राजा—( विलोक्य ) बाहुक ! यथाऽयं मन्दमन्दरुदितः ससंरम्भमितस्ततः परिधावति पौरलोकस्तथा जाने सम्प्रत्येव कोऽपि विपत्स्यते ।

इतः प्रारभ्यन्ते निचितचितयः पश्य भृतकैः
प्रयाति प्रत्याशं विषमतमतूर्यध्वनिरितः ।
द्विजन्मानोऽप्येते निधनधनविच्छेदचकिताः
ससंरम्भं धावन्त्यपरिचितशूकास्तत इतः ॥ ५ ॥

नलः—देव ! एतं वृद्धब्राह्मणं पृच्छामि ।

( ततः प्रविशति गृहीतयष्टिर्गमनाकुलचेता वृद्धो ब्राह्मणः )

( उपसृत्योच्चैःस्वरम् ) आर्यार्य !

ब्राह्मणः—नियोजयतु यजमानः ।

नलः—वैदेशिकत्वादनभिज्ञोऽस्मि वृत्तान्तस्य, तत् कथय किमिदमतितरां करुणम् ?

ब्राह्मणः—महाभाग ! किं कथयामि मन्दभाग्यः ? अकाण्डक्रोधसंरुद्धचेतसा वेधसा सर्वसंहारः प्रारब्धोऽद्य विदर्भपतिकुटुम्बस्य ।

राजा—कथमिव ?

ब्राह्मणः—प्राणेभ्योऽपि प्रिया विदर्भभर्तुरेकैव पुत्री ।

नलः—( स्वगतम् ) तत् किं देवी विपन्ना ? अतः परमपि विधिर्विकारं किं किमपि दर्शयिष्यति ? ( प्रकाशम् ) तत् किं तस्याः ?

ब्राह्मणः—अद्य प्रातरेकेन केनापि वैदेशिकेन राजकुले तत् किमपि प्रकाशितं येन सा चितामधिरोढुमध्यवसिता । पश्य पुरः पुरस्यादवीयसि देशे निकषा सहकारतरुखण्डं तस्याश्चितिर्वर्तते । अपरास्वप्येतासु तिसृषु तस्या एव परिकरलोकः प्रवेक्ष्यति । तदनुजानीहि मां प्राणात्ययसमयप्रवर्त्यमानदानप्रतिग्रहणार्थमुपगन्तुम् ।

राजा—( सविचिकित्समात्मगतम् ) अहो ! सर्वातिशायी द्विजन्मनां निसर्गसिद्धो लोभातिरेको यदयमन्त्येऽपि वयसि वृथा वृद्धो निधनधनप्रतिग्रहान्न विरमति ।

नलः—व्रजस्व सिद्ध्यै ।

**ब्राह्मणः**—स्वस्ति महाभागाय ( इत्यभिधाय मन्दं मन्दं निष्क्रान्तः )

**राजा**—बाहुक ! विप्रलब्धाः केनापि वयं स्वयंवरसमाह्वानेन । तद् यावत् कोऽप्यस्मानुपलक्षयति तावदित एव स्थानान्निवर्तय पताकिनम् ।

**नलः**—देव ! क्षणमस्मिन्नेव स्थाने श्रमोऽतिवाह्यताम्, यावदहमग्रतो गत्वा सम्यग् निर्णयामि ।

( राजा तथा करोति )

( परिक्रम्य विलोक्य ) कथमियं देवी प्राणपरित्यागसमयोचितनेपथ्या चिताभ्यर्णे कपिञ्जलया सह वर्तते ! अयमपि कलहंसोऽसावपि खरमुख इयमपि मकरिका ।

( ततः प्रविशन्ति यथानिर्दिष्टाः सर्वे )

**दमयन्ती**—(सास्रम्) ( १ ) कपिञ्जले ! पज्जालेहि जलणं जेण मे दुक्खमोक्खं करेदि ।

**कपिञ्जला**—( २ ) भट्टिणि ! विलंबेहिं विलंबेहिं कित्तियाइं पि दियहाइं, जाव भट्टा सव्वं सुद्धिं लहेदि । न हु पहियजणसंकहाओ अवितहाओ हवंति ।

**दमयन्ती**—( ३ ) कपिञ्जले ! अलाहि विलंबेण । न हु एदं असुदपुव्वं वत्तं सुणीय पाणे धरेदुं सक्केमि । अवि य न हवंति अलियाओ असुहसंसिणीओ वत्ताओ ।

**नलः**—( स्वगतम् ) का पुनरशुभशंसिनी वार्ता ? भवतु पृच्छामि । ( उपसृत्य दमयन्तीं प्रति ) आर्ये ! किमर्थं त्रैलोक्याद्भुतभूतरूपसम्पत्तिपावनं वपुरात्मनो वह्नावाहुतीक्रियते ? विरम विरमास्मादध्यवसायात् ।

**दमयन्ती**—( ४ ) वेदेसिग ! न संपदं अवसरो नियचरिदकहणस्स । ता जदि दे दाणेण इच्छा ता गिण्ह, आदु अन्नदो वच्च ।

( १ ) कपिञ्जले ! प्रज्वालय ज्वलनं येन मे दुःखमोक्षं करोति ।

( २ ) भर्त्रि ! विलम्बस्व विलम्बस्व कियतोऽपि दिवसान् यावद् भर्ता सर्वां शुद्धिं लभेत । न खलु पथिकजनसङ्कथा अवितथा भवन्ति ।

( ३ ) कपिञ्जले ! अलं विलम्बेन । न खल्वेतदश्रुतपूर्वं वृत्तं श्रुत्वा प्राणान् धारयितुं शक्नोमि । अपि च न भवन्त्यलीका अशुभशंसिन्यो वार्ताः ।

( ४ ) वैदेशिक ! न साम्प्रतमवसरो निजचरितकथनस्य । तद् यदि ते दानेनेच्छा तद् गृहाणाथवाऽन्यतो व्रज ।

**कलहंसः**—( उपसृत्य ) वैदेशिक ! शृणु वह्निप्रवेशनिमित्तम् ।

नलं रन्तुं चेतस्तरलमनलं वाऽस्य विरहे
सतीभावो यस्यामथ च जगतां विश्रुततमः ।
इयं सा क्षीराक्षी तदपि निषधक्षोणिपतिना
विना दोषोन्मेषादधिवनमपास्ता कथमपि ॥ ६ ॥

**नलः**—आः ! कथमद्य प्रातरेव चण्डालचरितस्य तस्य पापीयसो निषधाभर्तुरभिधानं त्वया स्मारितोऽस्मि !

**दमयन्ती**—( सरोषमात्मगतम् ) ( १ ) को एस दुम्मुहो अज्जउत्तं निंददि ? ( प्रकाशम् ) वइदेसिग ! नाहमरण्णे पइणा परिचत्ता, किन्तु सयं मग्गदो परिब्भट्ठा ।

**कपिञ्जला**—( २ ) पहिय ! जं कलहंसो कहेदि तं सच्चं ।

**कलहंसः**—निषधाधिपतिरिदानीं विपन्न इति श्रूयते । तत इयं देवी चितामधिरोहति ।

**नलः**—बाले ! यस्त्वामेकाकिनीमनिमित्तमरण्ये त्यजति तदर्थमेतत् त्रिलोकीलोचनोत्सवो वपुरग्निसात् क्रियत इति न मे मनसि समीचीनमाभाति । अपि च मुग्धे ! किं पावकदग्धैः स एव प्रियः प्राप्यते ? तैस्तैः शुभैरशुभैर्वा कर्मभिर्भिन्नवर्तिनीसञ्चरिष्णवः सर्वे जन्तवः ।

**कलहंसः**—पान्थ ! नायं तस्यैव प्रियस्य प्राप्त्यर्थं न च धर्मार्थं प्रयत्नः, किन्तु क्षत्रियाचारानुचारार्थं[1] प्रियाप्रियनिवृत्त्यर्थं च ।

**नलः**—( स्वगतम् ) अहो ! कौतुकम् ! एतामहमरण्ये व्यालानां बलिं कृतवान् । इयं पुनर्ममाप्रियनिवृत्त्यर्थं प्राणान् परित्यजाति ।

स्वमेकः पररक्षार्थं विनिहन्ति विपत्तिषु ।
स्वरक्षार्थं परं त्वन्यश्चित्रं चित्रा मनोगतिः ॥ ७ ॥

**दमयन्ती**—( ३ ) कपिञ्जले ! उवणेहि हुयासणं जेण चिदं पज्जालेमि ।

---

( १ ) क एष दुर्मुख आर्यपुत्रं निन्दति ? वैदेशिक ! नाहमरण्ये पत्या परित्यक्ता, किन्तु स्वयं मार्गतः परिभ्रष्टा ।

( २ ) पथिक ! यत् कलहंसः कथयति तत् सत्यम् ।

( ३ ) कपिञ्जले ! उपनय हुताशनं येन चितां प्रज्वालयामि ।

[1] ख, ग.०चरणा०

**कपिञ्जला**—( १ ) भट्टिणि ! अहं वि हुयासणमणुसरिस्सं ।

**दमयन्ती**—( २ ) कपिञ्जले ! मा एवं भण । तए अंबा संधारियव्वा ।

**कपिञ्जला**—( ३ ) भट्टिणी पुप्फवदी वि तुह मग्गं अणुसरिदुमिच्छदि, परं भट्टा वारेदि ।

**दमयन्ती**—( ४ ) संतं संतं पडिहदममंगलं ! णं अंबा तायवुड्ढत्तणे चलणसुस्सूसिणी भविस्सदि ।

**कपिञ्जला**—( ५ ) भट्टा वि तुह दुक्खेण थोवजीविदो संभावीयदि ।

**नलः**—( स्वगतम् ) उपस्थितः सर्वसंहारस्तदतः परं नार्हामि गोपयितुमात्मानम् । ( प्रकाशम् ) बाले ! यदि ते पतिः कुतोऽपि सन्निधीयते, तदा निवर्तसे साहसादस्मात् ?

**दमयन्ती**—( ६ ) पहिय ! किं मं उवहसेसि ? नत्थि मे इत्तियाइं भागधेयाइं, जेहिं पुणो वि अज्जउत्तं पिच्छामि । कपिंजले ! उवणेहि जलणं ।

( कपिञ्जला ज्वलनमुपनयति । दमयन्ती चितां प्रज्वालयति )

**कलहंसः**—देवि ! प्रथममहमात्मानं भस्मसात् करोमि ।

**खरमुखः**—( ७ ) नहि नहि अहं पढमं ।

**मकरिका**—( ८ ) चिट्ठंदु सव्वे वि, पढमं अहं चिदाए पविसिस्सं । न सक्कोमि तुम्हाण मरणं पिच्छिदुं ।

---

( १ ) भर्त्रि ! अहमपि हुताशनमनुसरिष्यामि ।

( २ ) कपिञ्जले ! मैवं भण । त्वयाऽम्बा सन्धारयितव्या ।

( ३ ) भर्त्री पुष्पवत्यपि तव मार्गमनुसरितुमिच्छति, परं भर्ता वारयति ।

( ४ ) शान्तं शान्तं प्रतिहतममङ्गलम् । नन्वम्बा तातवार्धक्ये चरणशुश्रूषिणी भविष्यति ।

( ५ ) भर्तापि तव दुःखेन स्तोकजीवितः सम्भाव्यते ।

( ६ ) पथिक ! किं मामुपहससि ? न सन्ति ममैतावन्ति भागधेयानि, यैः पुनरप्यार्यपुत्रं पश्यामि । कपिञ्जले ! उपनय ज्वलनम् ।

( ७ ) नहि नहि अहं प्रथमम् ।

( ८ ) तिष्ठन्तु सर्वेऽपि, प्रथममहं चितां प्रवेक्ष्यामि । न शक्नोमि युष्माकं मरणं द्रष्टुम् ।

**नलः**—( स्वगतम् ) **उक्तं भुजगरूपधारिणा तातेन 'यदि ते स्वरूपेण प्रयोजनं भवति तदा मामनुस्मरेः'।** ( पटं प्रावृत्य स्मरणं नाटयति। पुनरात्मानं विलोक्य ) **कथं नल एवास्मि जातः।**

**दमयन्ती—( १ ) भयवं हुयासण ! नमो दे। भयवंतो लोकपाला ! कधेहिं एदं मह चरिदं परलोगगयस्स अज्जउत्तस्स।**

( नेपथ्ये )

**हा वत्से ! क्व मामेकाकिनं चरमे वयसि परित्यज्य प्रयासि ? ( २ ) हा हरिणनयणे ! मयंकवयणे ! सिरीससोमाले ! वत्से ! किं अत्तणो मरणेण भीमरहं मारेसि ?**

**दमयन्ती**—( आकर्ण्य ) **( ३ ) नूणं मं वारिदुं तादो अंबा य समागच्छदि, ता लहुं पविसेमि।** ( चितां प्रदक्षिणीकृत्याधिरोढुमिच्छति )

**नलः**—( ससम्भ्रमं बाहौ गृहीत्वा )

**येनाकस्मात् कठिनमनसा भीषणायां कराल–**
**व्यालानां त्वं वनभुवि हतेनातिथेयीकृतासि।**
**निर्लज्जात्मा विकलकरुणो विश्वविश्वस्तघाती**
**पत्याभासः सरलहृदये ! देवि ! सोऽयं नलोऽस्मि ॥ ८ ॥**

( दमयन्ती प्रत्यभिज्ञाय परिरभ्य चोच्चैःस्वरं रोदिति। कलहंसादयः सर्वे प्रणम्य रुदन्ति )

**न प्रेम रचितं चित्ते न चाचारः सतां स्मृतः।**
**त्यजता त्वां वने देवि ! मया दारुणमाहितम् ॥ ९ ॥**

( १ ) भगवन् हुताशन ! नमस्ते। भगवन्तो लोकपालाः ! कथयतैतन्मम चरितं परलोकगतायार्यपुत्राय।

( २ ) हा ! हरिणनयने ! मृगाङ्कवदने ! शिरीषसुकुमारे ! वत्से ! किमात्मनो मरणेन भीमरथं मारयसि ?

( ३ ) नूनं मां वारयितुं तातोऽम्बा च समागच्छति, तल्लघु प्रविशामि।

---

१ ख. ग. भुजंग०। २ ख. ग. विहि०। ३ ख. ग. महा०।

यस्तवापि प्रेम्णा न प्रसाद्यते, सोऽहं सर्वथा खलु खलप्रकृतिरस्मि।

न प्रेम नौषधं नाज्ञा न सेवा न गुणो न धीः।
न कुलं न बलं न श्रीर्दुर्जनस्य प्रशान्तये॥ १०॥

किञ्च—

छिन्नेषु रावणे तुष्टः शम्भुर्दशसु मूर्द्धसु।
शतेऽपि शिरसां छिन्ने दुर्जनस्तु न तुष्यति॥ ११॥

कलहंसः—किमिदं विषादमूर्च्छालेनानौचित्यपिच्छलं विपठ्यते देवेन। न खलु सतामग्रणीर्निषधाधिपतिः प्रलयेऽपि खलो भवितुमर्हति।

नलः—देव्या अपि दाक्षिण्यमधिमनसमनादधानः कथं नास्मि खलः?

परसम्पत्समुत्कर्षद्वेषो दाक्षिण्यहीनता।
द्वयमेतत् खलत्वस्य प्रथमं प्राणितं स्मृतम्॥ १२॥

अलं कृत्वा वा दुष्टचरितस्मरणम्। कथय तावत् केनेदममङ्गलमावेदितम्?

कलहंसः—देव! एकेन वैदेशिकेन भस्मकनाम्ना खञ्जकुण्टेन मुनिना।

नलः—( सरोषम् ) तं दुरात्मानमिहानयत।

( ततः प्रविशति नियन्त्रितभुजस्तापसः )

( प्रत्यभिज्ञाय साक्षेपम् ) आः पाप! स एवासि येनाहमरण्ये प्रतार्य देवीं सन्त्याजितः।

तापसः—नाहमरण्ये जगाम, न च त्वां प्रतारयामास।

नलः—(सरोषम्) अरे! अपसर्प कर्णेजप! आघ्रून! ब्रह्मराक्षस! अतिजाल्म! अन्नदावानल! साम्प्रतमपि मां प्रतारयसि? ताडयत भोः! दुरात्मानमेनं कशाभिः।

( प्रविश्य कशापाणयस्तापसं ताडयन्ति )

तापसः—( साक्रन्दमुच्चैःस्वरम् ) मा मा ताडयत, सत्यमावेदयामि।

नलः—आवेदय।

तापसः—लम्बोदर एवाहम्। मया विदर्भनिर्वासितः कूबरान्तिकं घोरघोणो नीतः। घोरघोणेनैव कपटकैतवं कूबरोऽध्यापितस्ततस्त्वं पराजितः। घोरघोणोपदेशेन च मया त्वमरण्ये दमयन्तीं त्याजितः। इहागत्य त्वन्मरणप्रवादः कृतः।

नलः—( सरोषम् ) अये ! शूलामेनं दुरात्मानमारोपयन्तु । यदि वा तिष्ठतु, घोरघोणेन सहायं व्यापादयिष्यते ।

कलहंसः—देव ! दृष्टो दुरोदरविनोदविपाकः ?

नलः— तुभ्यं शपे परमतो विरतोऽस्मि [ तस्मात्. ]

तस्माद् दुरोदरविनोदकलङ्कपङ्कात् ।
यस्मात् प्रवृत्तमतिशायि विषादसाद-
दैन्यापमानघटनापटु नाट्यमेतत् ॥ १३ ॥

देवि ! कथय तावन्मया त्यक्ता सती वने किमनुभूतवत्यसि ?

दमयन्ती—( १ ) जं मए रन्ने अणुभूदं तं लदापाशच्छेदपेरंतादो नाडयादो अज्जउत्तेण दिट्ठं । अणंतरं सत्थवाहेण अयलउरे रिउवन्नस्स पासे अहं नीदा ।

नलः—ततस्ततः ।

दमयन्ती—( २ ) तदो कमेण इध समागदाए मए सुणिदं जधा–' दधिवन्नस्स सूवगारो सूरियवागं करेदि ।' तदो मए चिंतियं ' अज्जउत्तं विणा न अन्नो सूरियवागविज्जं जाणादि । ' अणंतरं अज्जउत्तपरिक्खणत्थं नाडयं काऊण कलहंस-खरमुह–मयरियाओ पेसिदाओ ।

नलः—कलहंस ! कथय कथं त्वमत्रायातोऽसि ?

कलहंसः—देवीमेकाकिनीं विदर्भेषु समागतामाकर्ण्य खरमुख–मकरिकाभ्यां सहाहमिहायातोऽस्मि ।

दमयन्ती –( ३ ) पच्छा अज्जउत्तस्स इहागमणत्थं अलियं सयंवरपवादं कडुय पुरिसो पएसिदो ।

( १ ) यन्मयाऽरण्येऽनुभूतं तल्लतापाशच्छेदपर्यन्तान्नाटकाद् आर्यपुत्रेण दृष्टम् । अनन्तरं सार्थवाहेनाचलपुरे ऋतुपर्णस्य पार्श्वेऽहं नीता ।

( २ ) ततः क्रमेणात्र समागतया मया श्रुतं यथा–' दधिपर्णस्य सूपकारः सूर्यपाकं करोति' । ततो मया चिन्तितम् ' आर्यपुत्रं विना नान्यः सूर्यपाकविद्यां जानाति ' । अनन्तरमार्यपुत्रपरीक्षणार्थं नाटकं कृत्वा कलहंस-खरमुख-मकरिकाः प्रेषिताः ।

( ३ ) पश्चादार्यपुत्रस्येहागमनार्थमलीकं स्वयंवरप्रवादं कृत्वा पुरुषः प्रेषितः ।

नलः—देवि ! क्षमस्व मया निर्निमित्तमपाकृतासि ।

दमयन्ती—( १ ) मह निमित्तं घोरघोणेन ईदिसमवत्थं णं अज्जउत्तो लंभिदो । ता अहं अज्जउत्तस्स अवराहिणी, न उणो मह अज्जउत्तो ।

कलहंसः—साधु देवि ! साधु पतिव्रतानामेष एव वाग्विभवः । देवोऽपि देवीमपहाय किमनुभूतवान् ?

नलः—देवीमपहाय क्रमेणाहम् ' एहि महापुरुष ! त्रायस्व माम् ' इति प्रतिमुहुर्व्याहरन्तं दवानलज्वालाजटालवपुषमेकमाशीविषमद्राक्षम् ।

सर्वे—( सकौतुकम् ) ततस्ततः ।

नलः—ततः स दवानलाकृष्टो मां दष्ट्वा विकृतरूपं कृतवान् । देवतारूपं च विधाय ' सोऽहं तव पिता महाराजनिषधस्त्वत्कृपया समागतवान् ' इति व्याहरत् ।

दमयन्ती—( २ ) तदो ।

नलः—' मा भैषीरतः परं द्वादशसु वर्षेषु पुनः प्रियादर्शनं ते भविष्यति ' इत्यभिधाय तावत् तिरोऽभूत् । ततोऽहं क्रमेण सूपकारवृत्त्या दधिपर्णाभ्यर्णे स्थितवान् ।

( नेपथ्ये )

प्रवर्त्यन्तां मङ्गलानि, प्रसाध्यन्तां मौक्तिकस्वस्तिकैः प्राङ्गणभुवः, प्रवर्त्यन्तां सङ्गीतकानि । ननु मनोरथानामप्यभूमिर्वत्सायाः प्रिया प्रियप्राप्तिरभूत् ।

कलहंसः—( ससम्भ्रमम् ) कथं विदर्भाधिपतिरितोऽभ्येति ?

( ततः प्रविशति पुष्पवत्या सह राजा भीमरथः । सर्वे ससम्भ्रममुत्थाय प्रणमन्ति )

राजा—( नलं प्रति ) ' यो दमयन्तीं परिणेष्यति तस्याहं राज्यभ्रंशं करिष्यामि ' इति स्वप्रतिज्ञा घोरघोणेन समर्थिता । घोरघोणः पुनः किल कलचुरिपतेर्दमयन्तीपरिणयनमभिलाषुकस्य चित्रसेनस्य मेषमुखनामा प्रणिधिः । अयमपि घोरघोणशिष्यो लम्बोदरश्चित्रसेनस्यैव कोष्ठकाभिधानश्चर एव ।

कलहंसः—देव ! निषधाधिपते ! तेऽमी चित्रसेन-मेषमुख-कोष्ठकाः, यान् मत्तमयूरोद्यानस्थितिर्देवो लेखे दृष्टवान् ।

( १ ) मम निमित्तं घोरघोणेन ईदृशीमवस्थां नन्वार्यपुत्रो लम्भितः । तदहमार्यपुत्रस्यापराधिनी, न पुनर्ममार्यपुत्रः ।

( २ ) ततः ।

राजा--निषधापते ! परिणतवयसो वयं धर्मकर्माहाः । तद् गृहाणेदमस्मदीयं विदर्भाधिराज्यम् ।

नलः--देव ! अहमात्मीयमेव राज्यं कपटकैतवहारितमादास्ये ।

पुष्पवती--(१) वत्स(च्छ) ! एसा दमयन्ती पुणो वि तुह समप्पिदा । ता जं ते पडिहादि तं करिज्जासु ।

नलः--अहं देव्या दमयन्त्या पतिव्रताव्रतेनैव क्रीतस्ततः परं मामनुकूलयन्ती देवी मल्लिकां धवलयति, घनसारं सुरभयति, मृगाङ्कं शिशिरयति ।

कलहंसः--किमतः परं प्रियतममाधीयते देवस्य ?

नलः--कलहंस ! अतः परमपि प्रियमस्ति ? त्वयैव तावद् देवी प्रथममस्मासु परमानुरागमानीता। भवतैव कुसुमाकरोद्याने संघटिता। त्वमेवास्मान् नटकपटधारी ज्ञातवान् । किमपरं त्वमेवास्य दमयन्तीसङ्घटनानाटकस्य सूत्रधारः ।

कलहंसः--तथापीदमाशास्यते--

दुरोदरकलङ्कतः कृतविराम चन्द्रोज्ज्वला-
मवाप्य निजसम्पदं पदमचिन्त्यशर्मश्रियः ।
यशोभिरनिशं दिशः कुमुदहासभासः सृज-
न्नजातगणनाः समाः परमतः स्वतन्त्रो भव ॥ १३ ॥

( इति निष्क्रान्ताः सर्वे )

॥ सप्तमोऽङ्कः ॥

इति नलविलासनाटकम् । कृतिरियं रामचन्द्रस्य[1] ।

(१) वत्स ! एषा दमयन्ती पुनरपि तुभ्यं समर्पिता । ततो यत् ते प्रतिभाति तत् कुर्याः ।

---

१ क. संवत् १४८४ वर्षे भाद्रसुदि १० लिखितम् । ख. ग. ० नाटकं समाप्तं । छ । कृतिरियं श्रीहेमचंद्रसूरिशिष्यश्रीरामचंद्रसूरीणां ॥ छ ॥

# नलविलासस्थानां पद्यानां सूची ।




| | पृष्ठे | | पृ० |
|---|---|---|---|
| अकाण्डकोपिनो भर्तुः | ४९ | आस्तां क्षयं किमिह | २९ |
| अकृताखण्डधर्माणां | ३ | आस्तां मर्मपरिज्ञानं | ३१ |
| अखिलानां बिसिनीनां | २७ | आः ! किं भविष्यति | १८ |
| अजल्प्यं जल्पामः | ३१ | आः स्त्रीरत्न ! पतिव्रते ! | ७३ |
| अत्यन्तकमनीयं | १९ | इतः प्रारभ्यन्ते | ८० |
| अथ तीव्रक्षुधा | ७५ | इमौ प्रेङ्खे कर्णौ | ३९ |
| अथाभूद् भगवान् विरञ्चि- | ५४ | इह अत्थि घोरघोणो | २२ |
| अधिकमाधिवहन्ती | ४७ | उत्कर्णयन् वनविहारि | ३१ |
| अधिका वर्णना वर्ण्यात् | १९ | उत्तंसकौतुकनवक्षत- | ३० |
| अनुभूतं न यद् येन | ६९ | उन्मीलद्दलशतपत्रपत्रलाक्षि | ५३ |
| अपकृत्योपकार्येषु | ७९ | उभयाभिमुख्यभाजां | ५६ |
| अपारे कान्तारे | ७६ | एकाकिन्यबला वियोगविधुरा | ७५ |
| अप्पा समप्पिओ | ७० | एगागिणी अहं भीलुगा | ७० |
| अभिनभः प्रसूतैर्नवमल्लिका | २९ | एते निर्झरझात्कृतैः | ५९ |
| अमीभिः संसिक्तैस्तव | ४१ | एनामरण्यभुवि | ७२ |
| अयमवनिपतीन्दुर्भूपतिः | ४८ | कच्चित् काननदेवताः | ६४ |
| अर्वाग्दृष्टितया लोको | ५८ | कर्णेजपं क्षतमुदो | ४३ |
| अविदितमर्मा कर्मसु | ३५ | कल्पान्तकल्पमुपकल्प्य | ७४ |
| अशेषाणां मध्ये | १० | कविः काव्ये रामः | १ |
| असौ पाखण्डिचाण्डालो | २७ | कान्तस्तवाहमधरीकृत- | ४२ |
| अस्तमयति पुनरुदयति | ५९ | कामं कामं कुसुम- | १२ |
| अस्याः क्षोणि ! विधेर्वशादभिनवां | ७१ | कामं शाठ्यव्यपोहेन | २० |
| अहंयूनामहंकारं | ५६ | कार्कश्यभूः स्तनतटी | १८ |
| आकुञ्चितैर्विकासितै- | ४५ | काव्यं चेत् सरसं | १६ |
| आक्रन्दः श्रुतिदुर्भगः | ७९ | काश्मीरेश्वर एष | ४९ |
| आगन्तुकोऽनुरागं | २३ | कुचकलशयोर्वृत्तं | ३६ |
| आत्मन्यपत्ये | ७ | कृतमिषशतं यद्व | ४५ |
| आपाकपिञ्जर- | ४ | कृत्याकृत्यविदोऽपि | ५५ |
| आमन्त्रिता वयमतः | ३० | कौशाम्बीपतिरयमुन्नतांसपीठः | ४९ |
| आलावहासपरिरंभणाइं | ३७ | क्व तद् भ्रूविक्षेपक्षिपित- | ६० |

| | पृ० |
|---|---|
| घनं प्रेमग्रन्थिं सदयमपि | ६३ |
| चन्द्रोद्यानसरांसि | ३९ |
| चलकमलविलासा— | १७ |
| चापल्यं दृशि शाश्वतं | ५१ |
| चित्रं त्रस्तैणशावाक्षि! | ४० |
| छिन्नेषु रावणे तुष्टः | ८५ |
| जनः प्रज्ञाप्राप्तं | २ |
| जन्मिनां पूर्वजन्माप्त— | २३ |
| जयति स पुरुषविशेषो | ६८ |
| ताराविलासरुचिरं | ५२ |
| तावन्मतिः स्फुरति | ५५ |
| तुभ्यं शपे परमतो | ८६ |
| त्यक्ता यद् विपिने | ७९ |
| त्रैलोक्योदरवर्तिकीर्ति— | ५२ |
| त्वया तावत् पाणिः | ६३ |
| दर्पाध्मातविरोधिवीरकुरली | ५० |
| दात्यूहकुक्कुभ— | ४ |
| दासस्तस्य | १० |
| दुरोदरकलङ्कितः | ८८ |
| दुष्टसङ्गः कुमारस्य | २६ |
| दृष्टे ! द्रष्टुमिति स्पृहां | ३७ |
| देवीनीविच्छिदालोल ! | ६३ |
| देवीं वाचमविक्रेयां | ८ |
| न गीतशास्त्रमर्मज्ञा | ३१ |
| न तथा वृत्तवैचित्री | ७७ |
| न प्रेम नाप्यभिजनं | ६६ |
| न प्रेम नौषधं नाज्ञा | ८५ |
| न प्रेम रचितं चित्ते | ८४ |
| नयननलिनपेयं | ५३ |
| नलं रन्तुं चेतस्तरलमनलं | ८२ |
| न स मन्त्रो | ३ |
| नास्मार्षं नयमास्मि | ६६ |
| निद्राच्छेदे क्व दयित ! | ६४ |
| निर्मायो यः कृपालुर्यः | २० |

| | पृ० |
|---|---|
| परसम्पत्समुत्कर्षद्वेषो॰ | ८५ |
| परिमलभृतो वाताः | २९ |
| प्रकर्षपद्मन्तिमं | ५२ |
| प्रबन्धा इक्षुवत्॰ | २ |
| प्रबन्धानाधातुं॰ | १ |
| प्रविशन्तीं कैरविणीं | ७८ |
| प्रियतमावदनेन्दुविलोकितैः | ३० |
| प्रेङ्खाविघट्टनरुषा | ३२ |
| भजन्ते कार्याणि | २७ |
| भयतरलकुरङ्गीनेत्र— | ३४ |
| भ्रातश्चूत ! वयस्य केसर ! | ६४ |
| मञ्जीराणि रणन्ति | १६ |
| मांसदृशां गुणदोषौ | ३६ |
| मातः कुञ्जरपत्नि ! | ७० |
| मातः प्रसीद वसुधे ! | ७३ |
| मां वा प्रीणय नैषधस्य | ७५ |
| मा विषीद कृतं बाष्पैः | ५६ |
| मुक्ताहार ! विहारमातनु— | ७२ |
| मुग्धाङ्गना॰नयनपात— | ४१ |
| यथा मुख्यस्य सौन्दर्यं | २२ |
| यथा यथा प्रतापाग्निः | ५० |
| यदि वा द्यूतकारस्य | ६४ |
| यस्यां मृगीदृशि दृशो— | ५० |
| यात्रायां किल यस्य | ५१. |
| येनाकस्मात् कठिनमनसा | ८४ |
| राज्यं हारितवानयं | ६६ |
| रेवासीकरवारिवेपथुवपुः | ५१ |
| लंबत्थणी त्ति नामं | २२ |
| लावण्यपुण्य— | १० |
| वक्त्रं चन्द्रो | १० |
| वक्त्रेन्दुः स्मितमातनोद् | ४० |
| वदनशशिनो | १८ |
| विटचेष्टया यया किल | ३२ |

| | पृ० |
|---|---|
| विन्यस्याभिनवोदये | ५४ |
| विश्वस्य श्रवणेन्द्रियं | १६ |
| विश्वासघातिनमकृत्यकरं | ६३ |
| वैदर्भीतनुवर्णनां | १६ |
| वैदर्भीरीतिमहं | १ |
| शान्तात्मापि खलः | १२ |
| शुभा वा लोकस्य | २६ |
| शृङ्गारसौरभरहस्यजुषां | ३२ |
| शौण्डीरेषु भयोज्ज्वलेषु | २१ |
| श्रुतीनां पीयूषं | २ |
| श्रुते ! बाधिर्यं त्वं कलय | ७१ |
| संयोगे श्रीमदो | १२ |
| स एष सुभगाग्रणीः | ५० |
| सखीशङ्काशङ्क- | ३६ |
| सङ्ख्यायामिव | २ |
| समेऽपि देहदेशत्वे | ८ |
| सर्वथा कैतवं निन्द्यं | २० |
| सर्वेषामपि सन्ति | ३२ |
| सहस्रांशोर्धाम्नां दिशि दिशि | ७९ |
| सहि ! चक्कवायदइए ! | ६९ |
| सान्निध्यात् पितुरानतं | ४८ |
| सुस्थे हृदि सुधासिक्तं | ५९ |
| सौदामिनीपरिष्वङ्गं | ४३ |
| स्थिरं कृत्वा चेतः | ५३ |
| स्पृशति न मणिज्योत्स्नाच्छन्नं | ६४ |
| स्पृहां लोकः काव्ये | २ |
| स्फुरति तिमिरे घूकव्राते | ६६ |
| स्फुरन्त्युपायाः शान्त्यर्थ- | ५५ |
| स्मेराक्षि ! क्षितिचक्रविश्रुतबलः | ४८ |
| स्वमेकः पररक्षार्थं | ८२ |
| स्विद्यान्नितम्बभरपूर- | ३१ |
| हा देव दिणेसर ! | ७३ |




# GAEKWAD'S ORIENTAL SERIES.

CRITICAL EDITIONS OF UNPRINTED SANSKRIT WORKS, EDITED BY COMPETENT SCHOLARS, AND PUBLISHED BY THE CENTRAL LIBRARY, BARODA.

## I. BOOKS PUBLISHED.

1. Kâvyamîmâṁsâ : a work on poetics, by Râjaśekara (880-920 A.D.) : edited by C. D. Dalal, M.A., and R. Anantakrishna Sastry, 1916. Re-issue, 1924 ... ... ... ... 2–4
2. Naranârâyaṇânanda : a poem on the Paurāṇic story of Arjuna and Kṛṣṇa's rambles on Mount Girnar, by Vastupâla, Minister of King Vîradhavala of Dholka, (A. D. 1221 and 1231) : edited by C. D. Dalal and R. Anantakrishna Sastry, 1916 ... ... 1–4
3. Tarkasaṅgraha : a work on Philosophy (Refutation of Vaiśeshika theory of automatic creation) by Ânandajñâna or Anandagiri, the famous commentator on Śaṅkarâchârya's Bhāṣyas, who flourished in the latter half of the 13th century : edited by T. M. Tripathi, B.A., 1917 ... ... ... ... ... 2–0
4. Pârthaparâkrama : a drama describing Ârjuna's recovery of the cows of King Virâṭa, by Prahlâdanadeva the founder of Pâlanpur and the younger brother of the Paramāra King of Chandrāvatî, (a state of Mârwâr), and a feudatory of the kings of Guzerat, who was a Yuvarâja in Samvat 1220 ( A. D. 1164 ) : edited by C. D. Dalal, M.A., 1917 ... ... ... ... ... 0–6
5. Râshṭrauḍhavaṁśa : an historical poem (Mahâkâvya) describing the history of the Bagulas of Mayûragiri, from Râshṭrauḍha, king of Kanauj and the originator of the dynasty, to Nârâyaṇa Shah of Mayûragiri, by Rudra Kavi composed in Saka 1518 (A. D. 1596) : edited by Pandit Embar Krishnamacharya with introduction by C. D, Dalal, M.A., 1917 ... ... ... ... 1–12
6. Liṅgânuśâsana : on Grammar, by Vâmana, who lived between the last quarter of the 8th century and the first quarter of the 9th century : edited by C. D. Dalal, M.A., 1918 ... ... 0–8
7. Vasantavilâsa : an historical poem (Mahâkâvya) describing the life of Vastupâla and the history of Guzerat by Bâlachandrasûri, from Modheraka (or Modhera in Kadi Prant, Baroda State), contemporary of Vastupâla, composed after his death for his son in Saṃvat 1226 (A. D. 1240) : edited by C. D. Dalal, M. A. 1917 ... 1–8
8. Rûpakasaṭkam : six dramas by Vatsarâja, minister of Paramardideva of Kalinjara, who lived between the 2nd half of the 12th century and the 1st quarter of 13th century : edited by C. D. Dalal, M.A., 1918 ... ... ... ... ... 2–4

9. Mohaparâjaya : an allegorical drama describing the overcoming of King Moha (Temptation), or the conversion of Kumârapâla, the Chalukya King of Guzerat to Jainism, by Yaśahapâla, an officer of King Ajayadeva, son of Kumârapâla, who reigned from A. D. 1229 to 1232 : edited by Muni Chaturvijayaji ; with Introduction and Appendices by C. D. Dalal, M. A., 1918 ... ... 2-0

10. Hammîramadamardana : a drama glorifying the two brothers Vastupâla and Tejaḥpâla and their King Vîradhavala of Dholka, by Jayasimhasûri, pupil of Vîrasûri and an Âcharya of the temple of Munisuvrata at Broach, composed between Samvat 1267 and 1286 (A. D. 1220 and 1239) : edited by C. D. Dalal, M.A., 1920 ... 2-0

11. Udayasundarîkathâ : a romance (Champu, in prose and poetry) by Soḍḍhala, who was a contemporary of and patronised by the three brothers Chchittarâja, Nâgârjuna, and Mummaṇirâja, successive rulers of Konkan, composed between A. D. 1026 and 1050 : edited by C. D. Dalal, M.A., and Pandit Embar Krishnamacharya. 1920 ... ... ... ... ... 2-4

12. Mahâvidyâviḍambana : a work on Nyâya Philosophy, by Bhaṭṭa Vâdîndra (A.D. 1210 to 1274) : edited by M. R. Telang. 1920. 2-4

13. Prâchînagurjarakâvysangrha : a collection of old Gujarati poems dating from 12th to 15th centuries A. D : edited by C. D. Dalal, M.A., 1920 ... ... ... ... ... 2-4

14. Kumârapâlapratibodha : a biographical work in Prâkrita, by Somaprabhâchârya composed in Samvat 1241 (A.D. 1195) : edited by Jinavijayaji. 1920 ... ... ... ... 7-8

15. Gaṇakârikâ : a work on Philosophy (Pâśupata School) by Bhâsarvajña Muni, who flourished in the 2nd half of the 10th century : edited by C. D. Dalal, M.A. 1921 ... ... ... 1-4

16. Sangîtamakaranda : a work on Music, by Nârada : edited by M. R. Telang. 1920 ... ... ... ... ... 2-0

17. Kavîndrâchârya List : List of Sanskrit works in the collection of Kavîndrâchârya, a Benares Pandit (1656 A. D.) : edited by R. Anantakrishna Sastry with a foreword by Dr. Ganganatha Jha. 1921. ... ... ... ... ... 0-12

18. Vârâhagrihyasûtra ; Vedic ritual (domestic) of the Yajurveda : edited by Dr. R. Shamashastry. 1920 ... ... ... 0-12

19. Lekhapaddhati : a collection of models of state and private documents dating from 8th to 15th centuries A. D : edited by C. D. Dalal, M. A., and G. K. Shrigondekar, M.A. 1925 ... 2-0

20. Bhavisayattakahâ or Pañcamîkahâ : a romance in Apabhraṁśa language by Dhanapâla (*circa* 12th century) : edited by C. D. Dalal, M.A., and Dr. P. D. Gune, M.A. 1923 ... ... 6-0

21. A Descriptive Catalogue of the Palm-leaf and Important Paper MSS in the Bhandars at Jessalmer, compiled by C. D. Dalal, M.A. and edited by L. B. Gandhi. 1924 ... ... ... 3-4

22, 23. Paras'urâmakalpasûtra : a work on Tantra, with commentary by Râmes'vara and Paddhati by Umânanda : edited by Mahadeva Sâstry, B.A., 2 vols. 1923 ... ... ... 11-3

24. Tantrarahasya : a work on the Prabhákara School of Pûrvamîmâṁsá by Rámânujáchárya : edited by Dr. R. Shamasastry. 1923 ... 1-8

25. Samarângana : a work on Architecture, town planning and engineering by King Bhoja of Dhara (11th century): edited by Mahamahopadhyáya T. Ganapati Sastry, Ph.D., etc., 2 vols. Vol. I, 1924 ... ... ... ... ... 5-0

26. Sádhanamálá : a Buddhist Tantric text of rituals, dated 1165 A.D. consisting of more than 300 small works composed by distinguished writers : edited by Benoytosh Bhattacharyya, M.A., General Editor, Gaekwad's Oriental Series 2 vols, vol. I. 1925 ... ... 5-0

27. A Descriptive Catalogue of MSS in the Central Library, Baroda. Vol. I (Veda, Vedalakhśana and Upanisads), compiled by G. K. Shrigondekar, M.A., and K. S. Ramaswami Sastry. 1925 ... 6-0

28. Mánosollâsa or Abhilashitârthachintámani : an encyclopædic work divided into one hundred chapters treating of one hundred different topics by Somes'varadeva, a Chálukya King of the 12th century : edited by G. K. Shrigondekar, M.A., 3 vols.-vol. I. 1925 ... 2-12

29. Nalavilása : a drama by Rámachandra Sûri, disciple of Hemachandra Sûri, describing the Paurânik story of Nala and Damayantî : edited by Messrs. G. K. Shrigondekar, M.A. and L. B. Gandhi, 1926 ... 2-4

30, 31. Tattvasangraha : a Buddhist Philosophical work of the 8th century by Śántarakshita, (705-762 A. D.) a Professor at the Nálandâ University, with Pañjikâ (commentary) by his disciple Kamalasîlá, also a Professor in Nâlandá : edited by Pandit Embar Krishnamâchârya with a foreward by the General Editor, 2 vols. 1926 ... (*Shortly*)

32. Samarângana, Vol. II, edited by Mm. T. Ganapati Sastri, Ph. D. of Trivandrum. 1925 ... ... ... ... 5-0

33. Advayavajrasangraha : consisting of twenty short works on Buddhist philosophy by Advayavajra, a Buddhist savant belonging to the 11th century A.D. : edited by Mahámahopâdhyáya Pandit Haraprasad Śastri, M.A., C.I.E., F.A.S.B., etc. ... ... ... (*Shortly*)

## II. BOOKS IN THE PRESS.

1. Nyâyapraveśa : the earliest work on Buddhist logic, by Dinnâga, with commentaries of Haribhadrasûri and Pârśvadeva : edited by Principal A. B. Dhruva, M.A., LL.B., Pro-Vice-Chanceller of the Hindu University Benares and Paṇḍit Vidhuśekhara Bhattacharyya of Śântiniketana.
2. Sâdhanamâlâ Vol. II, edited by Benoytosh Bhattacharyya, M.A., Ph.D., General Editor, Gaekwar's Oriental Series. Illustrated.
3. Nâṭyaśâstra : on dramaturgy, by Bharata with the commentary of Abhinavagupta of Kashmir : edited by M. Ramakrishna Kavi, M.A. Illustrated. 4 vols.
4. Kalpadrumakośa : a standard work on Sanskrit Lexicography edited by Pandit Ramavatara Sarma Sahityacharya, M.A.
5. Mânavagrihyasûtra : a work on Vedic ritual (domestic) of the Yajurveda with the Bhâṣya of Aṣṭâvakra : edited by Pandit Râmakrishna Harshaji S'âstri.
6. Apabhraṃśakâvyatrayî : consisting of three works, the Carcarî, Upadeśarasâyana and Kâlasvarûpakulaka by Jinadatta Sûri (12th century) with commentaries : edited by L. B. Gandhi.
7. Mânasollâsa or Abhilaṣitârthachintâmaṇi. Vol. II., edited by G. K. Shrigondekar, M.A.
8. A Descriptive Catalogue of MSS in the Jain Bhandars at Pattan edited from the notes of the late Mr. C. D. Dalal, M. A., by Pandit L. B. Gandhi, 2 vols.
9. Bhâvaprakâs'anam of Śâradâtanaya : an ancient work on Alaṃkâra edited by Pandit Râmaswâmy Sastri, Central Library, Baroda and His Holiness Yadûgiri Yatirâja Swâmî of Melkot.
10. Prajñopâyaviniśacyasiddhi of Anangavajra and Jñânasiddhi of Indrabhûti : two important works belonging to the little known Vajrayâna School of Buddhism (8th century A. D.) : edited by Benoytosh Bhattacharyya, M.A., Ph.D., General Editor, Gaekwad's Oriental Series.
11. A Descriptive Catalogue of MSS in the Central Library, Baroda Vol. II (Śrauta, Dharma and Gṛhya Sûtras) compiled by the Library Staff.
12. Mirat-i-Ahmadi with its Khatimae or Supplement : By Ali Mahammad Khan, the last Moghul Dewan of Guzerat : edited in the original Persian by Syed Nawabali, M. A., Professor of Persian, Baroda College, 2 vols.

## JUST PUBLISHED.

1. Supplement ( or Khatimae ) to the Mirat-i-Ahmadi, translated from the Persian of Ali Mahammad Khan, the last Moghul Dewan of Guzerat, by Syed Nawabali, M.A., and C. N. Seddon, I.C.S., (retired) with notes, appendices and 3 illustrations, 270 pages, demy 8vo. cloth 1925 ... ... ... ... ... Rs.